तदाऽऽगमान्तरेऽपि प्रत्यक्षेण वादिप्रतिवादिभ्यां कर्तुरननुभवा-च्छिन्नमूलमस्मरणं स्यादिति । तदप्यपौरुषेयत्वं प्रसज्यते । अथा-नुमानेन तदाऽनुमानस्य वेदकर्तृसाधकस्य प्रतिपादितत्वात् कथं च्छिन्नमूलमस्मरणम् । अथानुमानमनेन बाध्यते तदेत-रेतराश्रयत्वम् । तथाहि-तद्बाधेऽऽगमस्य प्रामाण्यम् । अस्य च प्रामाण्ये तद्बाध इति । अथागमान्तरे प्रयोजनाभावात् कर्तुरु पलम्भे यत्नं वादी न कृतवान् तेनानुपलम्भः । तन्न, कृतयत्ने-नापि केषांचिद्रुटे वटवैश्रवणादिना कर्तुरनुपलम्भात् । अथ वैदिकेषु कर्म्मसु प्रचुरव्ययेषु बह्वायासेषु च प्रवर्त्तमाने यत्ने नापि कर्त्तारमुपलम्भं कृतवान् न चोपलब्धवान् । ततो ज्ञायते नास्ति कर्ता । तत्रानुलब्धिलक्षणप्राप्तेषु देशकालस्वभावविप्रकृष्टेषु यत्नवतोऽप्यनुपलम्भो नासत्तां शोधयतीति । नास्मर्यमाणकर्तृ-त्वमनुमानं नाप्यर्थापत्तिरभावप्रमाणं वा । तयोर्निराकरिष्य-माणत्वात् । नापि "यद्वेदाध्ययनं तदध्ययनपूर्वम् । वेदाध्ययनत्वा-त् । इदानीन्तनाध्ययनवत्" इत्यव्यभिचारि साधनम् । अन्य-था "यः पथिकाग्निः सकालापूर्वको नारणिनिर्म्मथनपूर्वकः । पथिकाग्नित्वात्" इदानीन्तनपथिकाग्निवदित्यादेरपि साध-नता स्यात् । एवमन्यदपि यदपौरुषेयतासाधनं तदविद्यमानप्रति-बन्धं सर्वमनैकान्तिकमेव । तन्नानुमानावसेयाऽप्यपौरुषेयतेति । किञ्चायमपौरुषेयवाद्याह—

समयः प्रतिसत्त्वं वा प्रत्युच्चरणमेव वा ।
क्रियते जगदादौ वा सकृदेकेन केनचित् ॥

अयं हि पुरुषेण बन्धः क्रियमाणः प्रतिसत्त्वं किमेकः क्रियते, किं वाऽनेक इति? । एकत्वे कृतको न स्यात् । पूर्वमेव सिद्धत्वात् । अनेकेऽपि किं सर्वे वाचकाः, किं वा

त्वमेति चेत्। न च सर्वदोपलब्धिः। तदुक्तम्—नित्यत्वव्यापित्वेऽपि शब्दस्याकाशस्येव प्रयत्नान्तरमुपलब्धिरुपपद्यते। तथाहि—कूपादौ पूर्वमनुपलब्धस्य प्रयत्नादाकाशस्योपलब्धिर्दृष्टा। न च तस्यानित्यत्वम्। नापि व्यापित्वेऽपि सर्वत्रोपलम्भः। तथा शब्दं कुरु व्यपदेशा आकाशं कुर्विति व्यपदेशवन्नानित्यत्वं साधयन्ति। तथा स्तिमितवायुरूपगितस्य शब्दस्य कोष्ठ्येन वायुना तदपसारणेन कात्स्न्येनोपलब्धिः स्वरूपमात्रस्यैवोपलब्धेः। नियतदेशया हि वायवीया ध्वनयः प्रतिपन्नभिन्नं यथा शब्दकर्तुस्तेन न सर्वत्र सर्वेषामुपलब्धिरिति। अत एव यस्यां दिशि न वायोर्गतिर्न तत्र शब्दः श्रूयते इति। तथैकस्यैव मुखस्य व्यञ्जकस्यादर्शखड्गादिभिर्भेदाद्यथा भेदास्तथा ध्वनिधर्मा अल्पमहत्त्वादयः सान्निध्याच्छब्दे उपलभ्यन्ते तेन न प्रत्ययभेदित्वादनित्यत्वमिति। यथा हि घटः स्वल्पेन महता वा शब्देन प्रतिपाद्यमानो न भिद्यते तथा शब्दोऽपि महता ध्वनिना अल्पेन वा व्यज्यमानोऽर्थप्रतिपादनलक्षणार्थक्रियाकारी न भिद्यते इति। अथ वायवीनां श्रोत्राग्राह्यत्वात् कथं तद्धर्माणामल्पमहत्त्वादीनां श्रोत्रेणोपलम्भ इति। न शब्दस्यैकत्वेनोपलब्धिर्न तद्धर्माः कल्प्यन्ते। तथाहि—स एव गकारो महानल्पो वा न तु सोऽयमन्य इति प्रतीतिः। तस्माद् ध्वनिधर्माः सान्निध्यात्तथाभासत्वमिति। अथ भिन्नदेशस्थितैः पुरुषैः भेदेनोपलब्धेर्नैकः शब्दः इति। तदप्यादित्येनानैकान्तिकम्। तथाहि—विभिन्नदेशस्थिताः पुरुषा एकमप्यादित्यं केचित् पश्चिमायां दिशि उपलभन्ते, अपरे पूर्वस्यामिति। तदप्यसंगतमिति। तथाहि—व्यञ्जकेन किमावरणविनाशः क्रियते, अथ शब्दसंस्कारः, किं वा श्रोत्रसंस्कार उभयसंस्कारो वा ?। तत्रावरणं

नुमितम् । तथाहि—तन्तु पटकुटीं नष्टां कुर्वंस्तामेव करोति न पुनरपूर्वामिति । तद्वद्वर्णक्रमोऽपि नापूर्वः क्रियते इति । यतो दृष्टान्तेऽपि न तस्याः नित्यत्वं तद्रूपं दृष्टान्तात् क्रमस्य नित्यत्वम् । कल्पितं तु व्यवहारमात्रं न वस्तु साधयति । न च नित्यव्यापिनां वर्णानां क्रम उत्पद्यत इति । एतच्चाग्रेऽभिधास्यते । तस्मात्सङ्केतमात्रमेव न कश्चित्सम्बन्ध इति । किं च किमसौ एकार्थनियमतः सङ्केतेनाभिव्यज्यतेऽनेकार्थेनियतो वा? । यद्येकार्थनियतो सङ्केतवशादर्थान्तरे वेदस्य गतिः स्यात् । दृश्यते च व्याख्यातृविकल्पः। अथ मास्तु दृष्टविरोध इत्यनेकार्थेनियतोऽभिव्यज्यते तर्हि सकलार्थसाधारणस्य वेदस्य इष्टव्यक्तिमेव करोति व्याख्यातृरूपः समयकारः । कुत एतत् । तेनाग्निहोत्रं जुहुयात्स्वर्गकाम इति श्रुतौ खादेच्छ्वमांसमित्येष नार्थ इत्यत्र कामना । तन्न स्वाभाविकः शब्दार्थयोः सम्बन्धः किन्तु सङ्केतमात्रमेव भवति । असौ नित्यो वा स्यादनित्यो वा ? । अनित्यो पुरुषेच्छावृत्तिरवृत्तिर्वा पुरुषाधीनत्वेन पुरुषाणां यथाभिप्रायं देशादिपरावृत्त्या तेनार्थप्रतिपादनं स्यात् । न हि छागना पयः क्वचिन्नियुज्यते । पर्वतादिवत् । पुरुषे त्वप्रवृत्तित्वे कथमपौरुषेयत्वं स्यात् । नित्योऽपि शब्दार्थयोराश्रितः स्यादनाश्रितो वा ? । अनाश्रितत्वे आकाशकल्पस्य कः संबन्धार्थः । आश्रितत्वे वाऽऽश्रयाणामनित्यत्वादाश्रितेऽप्यनित्यता स्यात् । अथ सामान्यस्यैवाश्रयत्वभावात्तस्य च नित्यत्वात् कथमाश्रयनित्यत्वात्संबन्धस्यानित्यता । तदसत् । सामान्यस्य परपरिकल्पितस्याभावात् । तथा तद् व्यक्तिभ्यो भिन्नं स्यादभिन्नं, वा भिन्नाभिन्नं वा? । न तावद्भिन्नाभिन्नम् । विरोधात् । अथ केनाप्यंशेन भिन्नं केनाप्यभिन्नम् । ननु कथं निरंशस्य सामान्यस्यैतत् । किं च यमात्मानं पुरोधायेद

यदि नित्यं न तस्य विनाशः । अथानित्यं तदा यदि नाशितं तदा मृतः पुनर्न जीवतीति सर्वदा शब्दानुपलभ्येत । अथ क्षणिकसंतानेनोपपद्येत तदा सर्वदाशान्तरमुपलभ्येत प्रयत्नविरामेऽपि शब्दस्य मीमांसकैर्व्यापिनो निरवयवस्योपगमवत्संस्कारे सर्वत्र सर्वैरुपलम्भः स्यात् । श्रोत्रं संस्कृतं सर्वान् शब्दानुपलभेत । न हि चक्षुरुन्मीलितं कंचिदेवोपलभते योग्यदेशस्थं नान्यमिति दृष्टम् । अपि च तत्किमाकाशमथान्यदेव किंचित्? आकाशस्यैकत्वात् सर्वेषां सर्वत्र सर्वोपलब्धिः स्यात् । अथास्माकं मीमांसकानां प्रतिपुरुषं भिन्नं श्रोत्रं तेन नायं प्रसङ्गः । न सर्वेषामात्मनां सर्वव्यापित्वादेकश्रोत्रसंस्कारे सर्वे आत्मन उपलभेरन्निति तत्प्राप्यकारित्वेऽपि। अथ संबन्धेऽपि यस्यैवादृष्टेनोपभोगाय संस्कृतं श्रोत्रं स एवोपलते नान्यस्तद्देशस्थोऽपि । यथा नगरस्थितोऽपि तदधिकाराद् भ्रंशितो न तद्भोगं लभते इति । नैतदस्ति । तददृष्टमपि सर्वसंबन्धि किं न भवति। सर्वैरकरणादिति चेत् । सर्वे किं न कुर्वन्ति । मनोहि संचाराभावादिति चेत् । ननु सर्वव्यापित्वेऽविचलितरूपत्वेनैतद्युज्यते । एकस्य मनोभिसंबधो नान्यस्येति । तस्माद्यत्किञ्चिदेतदिति । एतेनोभयसंस्कारोऽपि निरस्त इति । नित्यपरमाणवारब्धस्य घटस्येव नित्यवर्णारब्धस्य क्रमस्यानित्यत्वे वर्णनित्यत्वं क्वोपयोगि । अथ वर्णानां वाचकत्वं न क्रमस्य । न हि घटक्रमो वाचको दृष्टः । नैतदस्ति । अन्वयव्यतिरेकाभ्यां हि क्रमस्यैव वाचकत्वं न वर्णानाम् । अन्यथा व्यस्तक्रमाणामपि तदर्थप्रतिपत्तिः स्यात् । क्रमविशिष्टानां वाचकत्वमिति चेत् । न, समर्थविशेषणात् तस्य चापौरुषेयत्वात् । यद्यक्रमस्य घट्टकुटीदृष्टान्तेन नित्यत्वं व्यावर्णितं तत्सदागलसाङ्गाज्जाद्य-

क्षुभितम् । तथाहि—तन्तु पट्टकुटीं नष्टां कुर्वंस्तामेव करोति न पुनरपूर्वामिति । तद्वद्वर्णक्रमोऽपि नापूर्वः क्रियते इति । यतो दृष्टान्तेऽपि न तस्याः नित्यत्वं तत्रूपं दृष्टान्तात् क्रमस्य नित्यत्वम् । कल्पितं तु व्यवहारमात्रं न वस्तु साधयति । न च नित्यव्यापिनां वर्णानां क्रम उत्पद्यत इति । एतच्चाग्रेऽभिधास्यते । तस्मात्सङ्केतमात्रमेव न कश्चित्सम्बन्ध इति । किं च किमसौ एकार्थनियमतः सङ्केतेनाभिव्यज्यतेऽनेकार्थेनियतो वा? । यद्येकार्थनियतो सङ्केतवशादर्थान्तरे वेदस्य गतिः स्यात् । दृश्यते च व्याख्यातृविकल्पः। अथ मास्तु दृष्टविरोध इत्यनेकार्थेनियतोऽभिव्यज्यते तर्हि सकलार्थताधारणस्य वेदस्य इष्टव्यक्तिमेव करोति व्याख्यातृरूपः समयकारः। कुत एतत् । तेनाग्निहोत्रं जुहुयात्स्वर्गकाम इति श्रुतौ खादेच्छ्वमांसमित्येष नार्थ इत्यत्र कामना । तन्न स्वाभाविकः शब्दार्थयोः सम्बन्धः किन्तु सङ्केतमात्रमेव भवति। असौ नित्यो वा स्यादनित्यो वा? । अनित्यो पुरुषेच्छावृत्तिरवृत्तिर्वा पुरुषाधीनत्वेन पुरुषाणां यथाभिप्रायं देशादिपरावृत्त्या तेनार्थप्रतिपादनं स्यात् । न हि छायया वृक्षः क्वचिन्नियुज्यते । पर्वतादिवत् । पुरुषे त्वप्रवृत्तित्वे कथमपौरुषेयत्वं स्यात्। नित्योऽपि शब्दार्थयोराश्रितः स्यादनाश्रितो वा? । अनाश्रितत्वे आकाशकल्पस्य कः संबन्धार्थः । आश्रितत्वे वाऽऽश्रयाणामनित्यत्वादाश्रितेऽप्यनित्यता स्यात् । अथ सामान्यस्यैवाश्रयत्वभावात्तस्य च नित्यत्वात् कथमाश्रयनित्यत्वात्संबन्धस्यानित्यता । तदसत् । सामान्यस्य परपरिकल्पितस्याभावात् । तथा तद् व्यक्तिभ्यो भिन्नं स्यादभिन्नं, वा भिन्नाभिन्नं वा? । न तावद्भिन्नाभिन्नम्। विरोधात्। अथ केनाप्यंशेन भिन्नं केनाप्यभिन्नम् । ननु कथं निरंशस्य सामान्यस्यैतत्। किं च यमात्मानं पुरोधायेद्

सामान्यमयं विशेष इति व्यवस्थाप्यते यदि तेनात्मना भेदस्त-
दा भेद एव अथाभेदस्तदाऽभेद एव । अथ तत्रापि भेदे तर्हि
नवस्था । नचेदृशं वस्तुगतमाश्रयमभ्युपगमीतामहे । तत्र तासो
भिन्नाभिन्नम् । तासां नानात्वे तस्यापि नानात्वोपपत्तेः ।
तदेकत्वे तासामेकताप्रसङ्गादिति । नाभिन्नमपि भिन्नम्
असामान्यरूपतापत्तेः । दण्डादिवत् । अनेकसंबन्धात्सामान्य-
दिति चेत् । न, संख्याकार्यद्रव्यादेरपि सामान्यरूपताप्रसङ्गात् ।
अथानुस्यूताकारानुभूयमानं सामान्यं नेतरदिति चेत् । ननु
किमात्मरूपानुस्यूतं पररूपानुस्यूतं वा ? । न तावदात्म-
रूपानुस्यूतम् । आत्मन्यनुगमाभावात् । अथ पररूपानु-
स्यूतम् । पररूपानुस्यूतेन किं तादात्म्यं तत्समवायो वा ?
तद्यदि तादात्म्यं पूर्ववद्दोषप्रसङ्गः । अथ समवायः । तदयुक्तम् ।
तस्याभावात् । भवतु वा स सर्वव्यापि गोत्वं यथा गोपिण्डे-
ष्वसमर्थयति तथा कर्कादिपिण्डैरपि संबन्धयेत् । अथान्तरसंबन्ध-
कल्पनायां अनवस्था । किं च सामान्यं व्यक्तिषु वर्त्तमानमेक-
देशेन वा वर्त्तत अनेकदेशेन वा ? । नैकदेशेन । निष्प्रदेशत्वात्सा-
मान्यस्य । नापि सामस्त्येन । एकस्य मेव व्यक्तौ परिसमाप्ति-
प्रसङ्गात् । किं च केयं वृत्तिराधेयता वा स्यात् व्यक्तिपूर्वा व
भवेत् । नाधेयता । निष्क्रियत्वात् । सामान्यस्य गुरुणो हि द्रव्यस्य
पततः स्थिरिकरणादाधारः स्यात् । न चैतत् स्थिते भिन्नाभि-
सामान्ये युज्यते । नापि व्यक्तिः । नित्यस्य व्यक्तेरया-
। तथाहि—व्यक्तिरावरणापगमे सति ज्ञानजनकत्वमुच्यते ,
च नित्यस्य ज्ञानजनकत्वं विद्यते । यदेव हि ज्ञानजनकाव-
स्थायां सामान्यरूपं तदेव व्यक्तावस्थायामपीति प्रागेव जन-
येत् । यद्वा अव्यक्तावस्थायामप्येकरूपत्वात् जनयेत् । अथ

कारकान्तरमपेक्ष्य जनयति । ननु कारकान्तरेण किं तस्य जनकत्वं क्रियते अथ ज्ञाप्यते ? तद्यदि क्रियते। सुस्थितं नित्यत्वम्। अथ ज्ञाप्यते सिद्धं तर्हि जनकत्वम्। कारकान्तराभावेऽपि भवतु को दोष इति चेत्कार्योत्पत्तिप्रसङ्गः । अथ कारकत्वेऽपि कार्यं जनयेत्। अहो राजाज्ञा गरीयसी देवानां प्रियस्य इतोऽपि न विद्यते सामान्यम्। तदुपलम्भकप्रमाणाभावात्। नन्वस्ति प्रमाणमनयोः सादृश्यम् । एवं रूपं तेन सदृशोऽयमसौ वाऽनेन सदृश इत्यादिज्ञानमप्रतिपन्नसामान्यस्य नोपपद्यते । अस्तीदं विज्ञानं बाधकविकलजातिज्ञापकम् । तदेतद्युक्तम्।यतः किं तेन निमित्तभूतेनैव विज्ञानमुत्पाद्यते कर्म्मतापन्नेन वा ? । तद्यदि निमित्तभूतेनोत्पाद्यते तदा ता एव व्यक्तयः समानाकारपरिणतास्तन्निमित्तं सन्तु अलं परपरिकल्पितेन सामान्येन। अथ कर्म्मतापन्नेनोत्पाद्यते तेनैवावभाति। न ह्यशेषव्यक्तिसाधारणं सामान्यरूपमध्यक्षमीक्षामहे । तत्र किं चित्सामान्यं यत्राश्रितः सम्बन्धः स्यात्। किं चाश्रयेण नित्यस्य सतः संबन्धस्य उपकारः क्रियते न वा?। अकरणे साकल्येन सकलं जगदाश्रयेत्। करणे वा स तस्माद्भिन्नः स्यादभिन्नो वा ? । अभेदे नित्यताहानिप्रसङ्गात्। भेदे च न किंचित्संबन्धस्य कृतं स्यात्। तत्संबन्धेऽप्युपकारकरणकल्पनायामनवस्था गगनतलावलम्बिनी धूमलतिके प्रसरन्ती दुर्निवारा स्यात्। तन्न कश्चिन्नित्यः सम्बन्धः। न च क्रमयौगपद्याभ्यामर्थक्रियाविरोधेन सम्बन्धः सामान्यमस्तु वस्तु नित्यं सतस्तेऽपि जनत्यरित । किं चासौ सम्बन्धः प्रतीतो वार्थं प्रकाशयेदप्रतीतो वा? । अप्रतीतस्य सन्निधिमात्रेणार्थप्रकाशने सर्वदा सर्वप्रतिपत्तॄणां प्रकाशयेत् । प्रतीतश्चेत् केन प्रतीतः । किं प्रत्यक्षेण, आहोस्विदनुमानेन ? ।

तावत् प्रत्यक्षेण । शब्दार्थव्यतिरेकेण तस्यानुपलब्धेः । नाप्यनुमानेन । लिङ्गस्य प्रत्यक्षेण सम्बन्धस्याग्रहणात् । अनुमानेन तेनैव सम्बन्धग्रहणे इतरेतराश्रयत्वम् । तथाहि—यावन्न सम्बन्धग्रहणं तावन्नानुमानं यावन्नानुमानं तावन्न सम्बन्धग्रह इति । अपरेणानुमानेन सम्बन्धग्रहणेऽनवस्था । तन्न प्रमाणप्रतीतस्सम्बन्धः । किञ्चासौ परिकल्प्यमानः तादात्म्यलक्षणः । तदुत्पत्तिलक्षणः संयोगलक्षणः, समवायलक्षणः, विषयविषयिलक्षणो वा स्यात् ।? तत्र न तावत्तादात्म्यलक्षणः सम्भवति । अप्रतीतेः । अन्यथा क्षुरोदकादिशब्दोच्चारणात् मुखपाटनपूरणादिरुपलभ्येत न चोपलभ्यते । तन्न प्रथमः । नापि द्वितीयः । यतः शब्देन वा अर्थो जन्येत अर्थेन वा शब्दः । प्रथमपक्षे न कश्चिदपरिपूर्णेच्छः स्यात् । द्वितीयेऽपि अर्थेषु यथास्वं पुरुषबुद्धिनिरपेक्षाणां शब्दानां श्रवणं स्यात् । न चार्थमात्रात् पुरुषबुद्धिनिरपेक्षाः शब्दा उत्पद्यन्ते । तथाहि—अर्थदर्शनं ततस्तत्प्रतिपादनाभिप्रायस्ततो विवक्षा ततः स्थानकरणाभिघातः, ततः शब्दनिष्पत्तिरिति नार्थजन्यता शब्दानाम् । न च नित्यत्वेनाभ्युपगतानामयं प्रकारः सम्भवति । तन्न तदुत्पत्तिलक्षणः । नापि संयोगलक्षणः । यतो मुखे शब्दस्योपलब्धिर्भूमावर्थस्य । नापि समवायलक्षणः । अयुतसिद्धानामाधार्याधारभूतानामेव हि वर्ण्यते । न च शब्दार्थयोरयुतसिद्धिराधाराधेयभावो घटते । तन्न समवायोऽपि । विषये विषयिभावोऽपि वाच्यवाचकभाव एव । स च सति सम्बन्धे नित्ये साङ्केतिके वा स्यात् न पुनरसति सम्बन्धे । अन्यथा सर्वार्थे वाच्यवाचकभावः स्यात् । तन्न कश्चिद्वास्तवः सम्बन्धो यस्यां पौरुषेयता परिकल्प्येत । नापि वर्णा अपौरुषेयाः । तेषां लोकवेदयोर्भेदानभ्युपगमात् । तदपौरुषेयत्वसाधनेन

किञ्चिन्नापौरुषेयं स्यात् । ततो मिथ्याशब्दानामप्यपौरुषेयत्वे निष्फलैवापौरुषेयता । भेदाभ्युपगमे वाऽभ्युपेतहानिः प्रत्यभिज्ञाया अप्रामाण्यं च स्यात् । तथाहि–वेदे गकारं श्रुत्वा पुंसः स एव गकारो यो मया लौकिकेषु वाद्येषूपलब्ध इति प्रत्यभिज्ञानोत्पत्तेस्तदप्रामाण्ये सर्वत्र प्रत्यभिज्ञायामनाश्वास इति न वर्णानामपौरुषेयता भवतां श्रेयस्करीति । नापि वाद्यम् । यतस्तद्वर्णेभ्यो भिन्नं वा अभिन्नं वा अभेदे वाच्यमेव स्यात् वर्णा एव वा स्युः ? । भेदेऽपि तददृश्यं स्यात् दृष्टं वा ? । अदृश्यत्वे न ततोऽर्थप्रतिपत्तिः स्यात् । न ह्यप्रतीताद्वाद्यादर्थप्रतीतिः साधीयसी । अप्रतीतादपि अर्थप्रतीतौ न प्रतीतेर्विरामः स्यात् । नापि दृश्यम् । अनुपलम्भात् । न हि देवदत्तादिवर्णव्यतिरिक्तं किञ्चिद्वाद्यमुपलभामहे । किञ्च वाद्यं वर्णद्वारेण वा प्रतायेत स्वातन्त्र्येण वा ? । न तावत्स्वातन्त्र्येण । न ह्यवर्णश्राविणो वाद्यप्रतीतिरस्ति । वर्णैरपि प्रतीयमानं वाद्यं सावयवं स्यात्, अनवयवं वा ? तेऽप्यवयवाः प्रत्येकं सार्थकाः स्युर्निरर्थका वा ? । सार्थकत्वे एकावयवप्रतीतावपि सकलवाद्यार्थप्रतीतिः प्रसज्येत । निरर्थकत्वे सकलावयवप्रतीतावपि न वाद्यार्थप्रतीतिः प्रसज्येत । नापि निरवयवम् । तद्धि वर्णैः समस्तैर्वा प्रत्याय्यते व्यस्तैर्वा ? । न तावत्समस्तैः । वनितावत् समस्तैरुच्चरितप्रध्वंसिनां वर्णानां सामस्त्यासंभवात् । नापि व्यस्तैः । प्रथमवर्णश्रवणकाले एव सकलस्य वाक्यस्य प्रतीतेः शेषवर्णोच्चारणस्य वैयर्थ्यप्रसङ्गात् । अथ समस्तवर्णसंस्कारवत्या ऽन्त्यवर्णबुद्ध्या वाक्यावधारणमिष्यते । ननु किं तत्स्मरणमुताध्यक्षम् ? । न तावत्स्मरणम् । विद्यमानान्त्यवर्णग्राहकत्वात् । नापि प्रत्यक्षम् । अविद्यमानपूर्ववर्णविषयत्वात् । अथ पूर्ववर्णस्मरणान्त्यवर्णग्रहणाभ्यां एकं विकल्पज्ञानं जन्यते

तेन वाच्यावधारणम् । नन्वेवं कल्पनाज्ञानविषयत्वे काल्पनिकत्वं वाच्येऽभ्युपगतं स्यात् न वस्तुरूपता । अनेकवर्णानां च एकवाच्यप्रतिपादनेऽर्थे क एषां व्याघातो येनैकं वाच्यं वर्णव्यतिरिक्तमर्थप्रतिपादकं कल्प्येत । कल्प्यमानं वा तदनित्यं वानित्यम्? । यद्यनित्यं करणव्यापारेणान्वयव्यतिरेकानुविधानात् पौरुषेयमेव स्यात् । तदुक्तम्—

अनित्यं यत्नसंभूतं पौरुषेयं कथं तु तत् ।

अथ नित्यं सामर्थ्यतिरस्कारायोगात् सर्वदाऽर्थप्रतीतिं जनयेत् । आवृतत्वान्नेति चेत् । न, नित्यस्यावरणायोगात् । किंचित्कुर्वाणं ह्यावारणं स्यात् । न च नित्यस्य किंचित्कर्तुं पार्यते करणे वा अनित्यताप्रसक्तेः । यदि च तात्वादिव्यापारेऽपि कदाचिदनुपलब्धिर्वाच्यस्य स्यात् तदा व्याप्यधर्मानुविधानात्किंचिदावरणमपि कल्प्येत । व्यङ्ग्यस्य हि घटादेरेव धर्मो यदुक्तप्रदीपादौ व्यञ्जके सति न सर्वदोपलब्धिः । अन्यथा तात्वादिव्यापारे नियमेनोपलभ्यमानस्य शब्दस्य व्यङ्ग्यत्वपरिकल्पने घटस्यापि कुलालादिव्यङ्ग्यताप्रसङ्गः स्यात् किञ्चिद्वाच्यं वर्णानुपूर्वी बोध्यमिति चेत् । ननु सा च्यानुपूर्वी वर्णेभ्यो भिन्ना स्यादभिन्ना वा? । न तावद्भिन्ना । भिन्नवाच्यदूषणेनैव तस्या निरस्तत्वात् । नाप्यभिन्ना वा । अनित्यत्वे तेषां पौरुषेयत्वमेव स्यात् तद्रूपायां वाऽऽनुपूर्व्यां अतिरिक्तैव स्यात् न गगनमिति । किन्तु तेऽपि वर्णा नित्याः स्युरनित्या वा? । अनित्यत्वे तेषां पौरुषेयत्वमेव स्यात् । नित्यः व्यापिनो वा स्युरव्यापिनो वा? । अव्यापित्वे न सर्वत्रोपलम्भः स्यात् । तथाहि—कान्यकुब्जदेशव्यवस्थितस्य शब्दस्य न मालवदेशव्यवस्थैः पुंभिरुपलम्भः स्यात् । अप्राप्यकारित्वाच्छ्रो-

त्रस्यादोष इति चेत्। न, तत्रापि योग्यतापेक्षणात्। अपरकान्तायस्कर्षवत् व्यापित्वाभ्युपगमेनानुपूर्वी स्यात्। तथा हि—सा देशकृता वा स्यात् यथा पिपीलकादीनां पङ्क्तौ, कालकृता वा स्यात् यथा बीजाङ्कुरादीनाम्?। तत्र न तावद्देशकृता। अन्योन्यदेशपरिहारेण वृत्तिर्हि देशपौर्वापर्यं तत्सर्वस्य सर्वत्र तुल्यदेशत्वाद्वर्णेषु न संभवति। वातातपादिवदात्मादिवच्च। नापि कालकृता। यतः कालपौर्वापर्यं यदैको नास्ति तदाऽन्यस्य सद्भावः स्यात्। तच्च नित्येषु न संभवति। सर्वदाभावात्। न चान्या गतिरस्ति। तत्कथं वर्णानुपूर्वीवाच्यं यदपौरुषेयं परिकल्पयेत। वाच्यदूषणेनैव च पदस्यापि निरस्तत्वात्तं न तद्दूषणं पृथगुच्यते। तत्र कश्चिद्वैदिकोऽपौरूपेयनिबन्धनः प्रामाण्यलक्षणो विशेषो वेदे स्यात् यत्सद्भावादसिद्धता हेतोर्भवेत्। नापि विरुद्धता। हेतोः सपक्षे सद्भावात्। नाप्यनैकान्तिकता। जगतोऽहेतुकताप्रसङ्गात्। तथा हि—कार्यभेदाभेदौ कारणभेदाभेदपूर्वकौ। अन्यस्य भेदहेतोरभावात्। तदुक्तम्—अयमेव हि भेदो भेदहेतुर्वा यदुत विरुद्धधर्माध्यासः कारणभेदश्च तौ चेन्न भेदकौ विश्वस्य वैश्वरूप्यं हीयते। तत्र यदि लौकिकवैदिकयोर्भिन्नकारणता स्यात्तदा भेदोऽहेतुकः स्यात्। कारणस्य हेतुभेदस्याभावात्। तथा विकलेऽपि कारणभेदे यदि कार्यभेदो न भवेत् सोऽप्यहेतुकः स्यात्। न च भेदाभेदौ विहायापरं जगदस्तीत्यहेतुकं सकलं स्यात्। न चाहेतुकं नित्यम्। सकलत्वादिप्रसङ्गात्। तन्नानैकान्तिकतापि। तस्मात् स्थितमेतन्नापौरुषेयो वेद इति तत्र तन्निबन्धनं वेदस्य प्रामाण्यमिति स्थितम्। नन्वीश्वरस्य सर्वकर्तृत्वात् सर्वज्ञत्वे सिद्धे कथं न प्रामाण्यम्। तथाहि—भूभूधरादिकं बुद्धिमत्कार-

णपूर्वकम् । कार्यत्वात् । यद्यत्कार्यं तत्तद्बुद्धिमत्कारणपूर्वकम् । यथा घटादि तथा भूभूधरादिकं तस्मात्तथेति । ननु कस्येदमसिद्धं किं गृहीतसङ्केतस्य किं वाऽगृहीतसङ्केतस्य? । यद्यगृहीतसङ्केतस्य तदा धूमोऽपि न नालिकेरद्वीपादायातस्य सिद्धः। अथ गृहीतसङ्केतस्य तदाऽस्मदादेः सिद्धत्वात् कथमसिद्धम्। नैतदस्ति । नागमसिद्धं वस्तु साधयति, किं तु प्रसिद्धम् । न च जगदादौ भूविमानादीनां प्रत्यक्षेण कार्यत्वं प्रतीयते। अनुमानेन प्रतीयत इति चेत्। तथा हि—यत्संस्थानवत्तत्कार्यम्। यथा पटस्तथा यद्रचनावत्तदवश्यं विनङ्क्ष्यति। यथा तन्तुव्यतिषङ्गजनितं रूपं तन्तुविनाशात्तन्मोचनाद्वा विनश्यति । ततो विनाशात् कार्यत्वं पृथिव्यादेरनुमीयत इति । अथ किमिदं रचनावत् किं परमाणवः, किं वा अवयवी? । न तावदणवः । तेषां नित्यत्वाभ्युपगमात् । यथा जैनस्यावयविनमन्तरेणाऽपि परमाणवः परिणमन्तः कार्यरूपतां भजन्ते न तथा नित्याणुवादिनामिति । नाप्यवयवी । तस्याभावात्। ननु धर्मिणं प्रतिपद्यते परः किं वा नेति? । यदि न प्रतिपद्यते, तदा कथं तन्निराकरणहेतोराश्रयासिद्धत्वमस्य । अथ प्रमाणे प्रतिपद्यते तदा कथं तन्निरासः? । नैष दोषः। यतः प्रसङ्गविपर्ययसाधनाभ्यां तन्निरासं मन्यन्ते । तथा हि—यदनेकवृत्ति तदनेकम्। यथा आम्रादिष्वनेकवृत्तिश्चावयव्यभ्युपगम्यत इति प्रसङ्गः। न चानेकरूपोऽभ्युपगम्यते। तस्मान्नानेकवृत्तिरिति प्रसङ्गविपर्ययः। व्याप्याभ्युपगमस्य व्यापकाभ्युपगमनान्तरीयकत्वप्रदर्शनान्नाश्रयासिद्धता प्रसङ्गहेतोः व्यापकश्च निवर्तमानो व्याप्यमादाय निवर्तत इति व्यापकाभावेऽपि नासिद्ध इति । विपर्ययहेतुरपि भिन्नत्वान्तराभावाद्व्याप्तिसिद्धेर्नानेका-

न्तिकौ । तथाहि—यद्यन्मात्रं निमित्तं तत्तस्मिन् सति भवत्येव। यथान्त्यकारणसामग्रीमात्रनिबन्धनाङ्कुरः । विरुद्धधर्माध्यासना-न्यनिमित्तश्च भेदव्यवहार इति स्वभावहेतुः । प्रतिभासभेदोऽपि न विरुद्धधर्मतामतिक्रामतीति नासिद्धता, सपक्षे भावान्न विरुद्धता। तन्निमित्ते सत्यपि भवतोऽन्यनिमित्ताभावात् सर्वत्राभावनिष्प्रसङ्गव्यापकविरुद्धोपलब्धिः। सापेक्षत्वानपेक्षत्वयोर्विरोधात् विपर्यये बाधकं प्रमाणम् । तथाहि—यथा निमित्ताभावेऽपि भवतो हेतुकता तथाऽविकले निमित्ते सत्यपि भवतोऽहेतुतैवाहेतोश्च स्यात् । असत्त्वमेव सत्तदा स्यात् । तन्नानैकान्तिकता । एकस्य युगदनेकवृत्तित्वमेव च विरुद्धधर्मः संसर्गः। तथाहि—अवयवेष्ववयवाः सामस्त्येन वा वर्त्तन्ते, एकांशेन वा ? । सामास्त्ये वृत्तावेकस्मिन्नेव वावयवे परिसमाप्तत्वादनेकवृत्तित्वं स्यात् । एकं द्रव्यं च स्यादेकस्य वाणोर्विभागाभावान्नित्यत्वं च कार्यद्रव्यस्य स्यादेकस्य चाजनकत्वं समग्रत्वं सामग्र्याः जनकत्वादवयवेषु वावयवीति प्रत्ययाभावप्रसज्येत । वृत्तावेकैकस्मिन्नवयवे युगपद्भावाभावौ स्यातां, तथा ह्येकस्मिन्नवयवे सामस्त्येन वर्त्तत इति तत्र सद्भाव उक्तः, पुनरन्यत्र तथैव वर्तत इति तदैव तत्रैवासद्भाव इत्येकत्र युगपद्भावाभावयोर्विरोधः । नाप्यंशेन। निरंशस्य तस्योपगमात् । सांशत्वे वा तेऽपि ततो भिन्नाः स्युरभिन्ना वा? । भिन्नत्वे पुनरप्युनेकांशवृत्तेरेकस्य सामस्त्यैकांशविकल्पानतिक्रमः । अभिन्नत्वे अंशान्तर्गमेऽशिनस्तद्भेदादनावप्रसङ्गः अंशयंत यीनंशानां । ततो निरंशोऽशी स्यात् । तत्र च पूर्वनीतितोऽनेकवृत्यभावोऽनेकवृत्तित्वे वा विरुद्धधर्माध्यासिता । अथावयविनोऽवयवेषु वृत्तिस्तत्र समवायः । ननु सोऽपि समवाय-

णपूर्वकम्। कार्यत्वात्। यद्यत्कार्यं तत्तद्बुद्धिमत्कारणपूर्वकम्। यथा घटादि तथा भूभृद्धरादिकं तस्मात्तथेति। ननु कस्येदमसिद्धं किं गृहीतसङ्केतस्य किं वाऽगृहीतसङ्केतस्य?। यद्यगृहीतसङ्केतस्य तदा धूमोऽपि न नालिकेरद्वीपादायातस्य सिद्धः। अथ गृहीतसङ्केतस्य तदाऽस्मदादेः सिद्धत्वात् कथमसिद्धम्। नैतदस्ति। नागमसिद्धं वस्तु साधयति, किं तु प्रसिद्धम्। न च जगदादौ भूविमानादीनां प्रत्यक्षेण कार्यत्वं प्रतीयते। अनुमानेन प्रतीयत इति चेत्। तथा हि—यत्संस्थानवत्तत्कार्यम्। यथा पटस्तथा यद्रचनावत्तदवश्यं विनङ्क्ष्यति। यथा तन्तुव्यतिषङ्गजनितं रूपं तन्तुविनाशात्तन्मोचनाद्वा विनश्यति। ततो विनाशात् कार्यत्वं पृथिव्यादिरनुमीयत इति। अथ किमिदं रचनावत् किं परमाणवः, किं वा अवयवी?। न तावदणवः। तेषां नित्यत्वाभ्युपगमात्। यथा जैनस्यावयविनमन्तरेणाऽपि परमाणवः परिणमन्तः कार्यरूपतां भजन्ते न तथा नित्याणुवादनामिति। नाप्यवयवी। तस्याभावात्। ननु धर्मिणं प्रतिपद्यते परः किं वा नेति?। यदि न प्रतिपद्यते, तदा कथं तन्निराकरणहेतोराश्रयासिद्धत्वमस्य। अथ प्रमाणे प्रतिपद्यते तदा कथं तन्निरासः?। नैष दोषः। यतः प्रसङ्गविपर्ययसाधनाभ्यां तन्निरासं मन्यन्ते। तथा हि—यदनेकवृत्तिस्तदनेकम्। यथा जलानलअनेकवृत्तिश्चावयव्युपगम्यते इति प्रसङ्गः। न चानेकरूपोऽभ्युपगम्यते। तन्नानेकवृत्तिरिति प्रसङ्गविपर्ययः। व्याप्याभ्युपगमस्य व्यापकाभ्युपगमनान्तरीयकप्रदर्शनान्नाश्रयासिद्धताप्रसङ्गहेतोः व्यापकश्च निवर्तमानो व्याप्यमादाय निवर्तत इति व्यापकाभावेऽपि नासिद्ध इति।

विपर्ययहेतुरपि निमित्तान्तराभावाद्व्याप्तिसिद्धेर्नानैका-

न्तिरेरे । तथाहि—यद्यन्मात्रं निमित्तं तत्तस्मिन् सति भवत्येव । यथान्त्यकारणसामग्रीमात्रनिबन्धनाङ्कुरः । विरुद्धधर्माध्यासमात्रनिमित्तश्च भेदव्यवहार इति स्वभावहेतुः । प्रतिभासभेदोऽपि न विरुद्धधर्मतामतिक्रामतीति नासिद्धता, सपक्षे भावान्न विरुद्धता । तन्निमित्ते सत्यपि भवतोऽन्यनिमित्ताभावात् सर्वत्राभावनिष्प्रसङ्गव्यापकविरुद्धोपलब्धिः । सापेक्षत्वानपेक्षत्वयोर्विरोधात् विपर्यये बाधकं प्रमाणम् । तथाहि—यथा निमित्ताभावेऽपि भवतो हेतुकता तथाऽविकले निमित्ते सत्यपि भवतोऽहेतुतैवाहेतोश्च स्यात् । असत्त्वमेव सदा स्यात् । तन्नानैकान्तिकता । एकस्य युगदनेकवृत्तित्वमेव च विरुद्धधर्मः संसर्गः । तथाहि—अवयवेष्ववयवाः सामस्त्येन वा वर्त्तन्ते, एकांशेन वा ? । सामास्त्ये वृत्तावेकस्मिन्नेव वावयवे परिसमाप्तत्वादनेकवृत्तित्वं स्यात् । एकं द्रव्यं च स्यादेकस्य वाणोर्विभागाभावान्नित्यत्वं च कार्यद्रव्यस्य स्यादेकस्य चाजनकत्वं समग्रत्वं सामग्र्याः जनकत्वादवयवेषु वावयवीति प्रत्ययाभावप्रसज्येत । वृत्तावेकैकस्मिन्नवयवे युगपद्भावाभावौ स्यातां, तथा ह्येकस्मिन्नवयवे सामस्त्येन वर्त्तत इति तत्र सद्भाव उक्तः, पुनरन्यत्र तथैव वर्तत इति तदैव तत्रैवासद्भाव इत्येकत्र युगपद्भावाभावयोर्विरोधः । नाप्यंशेन । निरंशस्य तस्योपगमात् । सांशत्वे वा तेऽपि ततो भिन्नाः स्युरभिन्ना वा ? । भिन्नत्वे पुनरप्युनेकांशवृत्तेरेकस्य सामस्त्यैकांशविकल्पानतिक्रमः । अभिन्नत्वे अंशान्तर्गतेऽशिनस्तद्भेदादनावप्रसङ्गः अंश्यंत ग्रीमंशानां । ततो निरंशोऽशी स्यात् । तत्र च पूर्वनीतितोऽनेकवृत्त्यभावोऽनेकवृत्तित्वे वा विरुद्धधर्माध्यासिता । अथावयविनोऽवयवेषु वृत्तिस्तत्र समवायः । ननु सोऽपि समवाय-

स्तेषु वर्त्तते न वा ? । यदि समवायस्य समवायान्तराभावा वर्त्तते तदा यावदसौ पाणिपादिषु पुरुषावयविनं संबन्धयति तावत् तन्त्वादिष्वपि किं न संबन्धयतु । वृत्तेरविशेषात् । अथ वर्त्तते तदा तत्रापि यदि समवायो वृत्तिस्तदानवस्था । अथानेकावयवाश्रितत्वं तदा यदनेकवृत्ति तदनेकमित्यनेनैव साधनेनस्याभावस्तत्र । अवयविनोऽनेकावयवसमवायस्तत्र वृत्तित्वं ततः सिद्धाप्रसङ्गहेतोर्विरुद्धधर्मात्मता । इतोऽप्यवयविनोऽनेकावयववृत्तेर्विरुद्धधर्माक्रान्तता । यतः एकस्मिन्नवयवे चले सति चलत्वं प्राप्नोति पुनस्तदैव द्वितीयावयवाचलत्वे ऽचलत्वं तथैकावयवरागे रागोऽरागे वाऽरागस्तथाऽऽवरणे आवरणमनावरणे वाऽनावरणमिति । निरंशस्य युगपच्चलाचलत्वादियोगो विरुद्धधर्मसंसर्गः । न चावयवानामेव चलत्वादिः नावयविन इति वक्तव्यम् । एकस्य पाण्यादेश्चलाचलादिप्रतीतिप्रसङ्गात् । तथा ह्यवयवचलनाच्चलत्वावभासः स्यात् तत्रैव वावयस्थितस्यावयविनोऽचलत्वप्रतीतिरित्येवं रक्तादिष्वपि वाच्यम् । किं चावयवेभ्यो ऽवयवी भिन्नो वा स्यादभिन्नो ? । यद्यभिन्नस्तदाऽवयवभेदवदवयविनः खण्डशो भेदप्रसङ्गः । अवयविस्वरूपवद्वायवानामभेदस्य वा तथा चैकस्यानंशस्याप्रतिभासनादप्रतिभासः जगत् स्यात् । अथ भिन्नस्तदा तस्यानुपलम्भादसत्त्वमेव तथा हि—यदुपलब्धिः लक्षणप्राप्तसन्नोपलभ्यते तदसदिति व्यवहर्त्तव्यम् । यथा खरविषाणादिर्नोपलभ्यते चोपलब्धिलक्षणप्राप्तावयवेभ्यो व्यतिरिच्यमानमूर्त्तिरवयवीति स्वभावानुपलब्धिः परैरवयविनो दृश्यत्वाभ्युपगमान्नासिद्धता । न च समानदेशत्वादवयविनोऽवयवेभ्यः पृथगनुपलक्षणमिति वाच्यम् । समानदेशत्वेऽपि रूपरसयोर्वातातपयोश्चैकेन्द्रियग्राह्यत्वेऽपि पृथु

गुपलक्षणात् । अथ दूरदेशस्यावयवप्रतिभासेऽप्ययविनः प्रतिभासनात् कथं नासिद्धता । तदसत् । अस्पष्टाकारस्यावस्तुत्वेन तत्प्रतिभासस्य भ्रान्तत्वात्। वस्तुतो वाऽन्यस्यापि निकटदेशस्य सोऽस्पष्टाकारं द्वयमुपलभेत सुतरां प्रतिभासते । अथाकारद्वयमवयविनः स्पष्टमस्पष्टं च । तत्र निकटस्थः स्पष्टमुपलभते दूरस्थोऽस्पष्टमिति । नन्वसावस्पष्ट आकारो यद्यवयवदेशः तदा निकटस्थ आकारद्वयमुपलभेताऽपान्यदेशस्थस्तदात्मनः पृष्टतस्तं पश्येत् । किंचैतदाकारद्वयमवयविनः केन गृह्यते? । न तावत् दूरदेशज्ञानेन । तत्र निकटदेशज्ञानविषयस्पष्टरूपानवभासनात् । अस्पष्टस्वरूपप्रतिभासं हि तदनुभूयते । नापि निकटदेशज्ञानेन । स्पष्टरूपावभासवेलायां हि तत्र नापरोऽस्पष्टाकारः प्रतिभासते । तन्नावयविन आकारद्वययोगः । अथ दूरदृष्टमवयविनः स्वरूपं परिस्फुटमिदानीं पश्यामीति । तयोरैक्यम् । ननु किमपरिस्फुटरूपतया परिस्फुटमवगम्यते, आहोस्विदपरिस्फुटरूपतया अपरिस्फुटम् । तत्र यद्याद्यः पक्षस्तदाऽपरिस्फुटस्य रूपसंबन्धित्वमेकावयविनः प्रोम्नोति । परिस्फुटरूपस्यापरिस्फुटरूपानुप्रवेशेन प्रतिभासनात् । अथ द्वितीयस्तदास्पष्टरूपत्वमेव स्यात्। अस्फुटस्य विशदरूपानुप्रवेशनावभासनात् तन्न स्वरूपद्वयावगमोऽवयविनः । न चैकस्य विरूधर्मद्वययोगउपपत्तिमान् । ततः स्फुटास्फुटरूपयोरेकत्वप्रतिभासनमभिमानमात्रम् । अथालोकभावाभावकृतस्तत्र स्फुटास्फुटप्रतिभासभेदः । नन्वालोकेनापि अवयविस्वरूपमेवोद्भासनीयं तच्चेदविकलं दूरदेशज्ञाने प्रतिभाति कथं न तत्र स्फुटावभासः । अन्यथा विषयभेदमन्तरेणापि ज्ञानप्रतिभासभेदेन ज्ञानावभासभेदो रूपरसयोरपि भेदव्यवस्थापकः स्यात् ।

अथावयविस्वरूपमुभयत्राप्येकमेव प्रतिपत्ते । स्फुटास्फुटाका
तु ज्ञानस्यात्मानावित्युच्येत । तदसत् । यदि तौ ज्ञानाका
कथमवयविरूपतया प्रतिभासत इत्यभ्युपगमस्तदुपगमेऽ
व्याकारौ तावुपगन्तव्यौ । न चापरं स्फुटाकारमामुक्त्वाऽव
विस्वरूपमाभाति । व्यक्ताव्यक्ताकारात्मनश्चावयविनो व्यक्त
व्यक्ताकारवद्भेदः । तन्न । अवयवी दूरदेशस्थावयवाप्रतिभासे
प्रतिभाति । किं च किं कतिपयावयवप्रतिभासे सत्यवयवी प्र
भातीत्यभ्युपगम्यते, आहोस्वित् समस्तावयवप्रतिभासे ? । यद
द्यः पक्षस्तदा जलमग्नमहाकायस्तम्भादेकपरितनकतिपयावय
प्रतिभेऽपि समस्तावयवव्यापिनः स्तम्भावयविनः प्रतिभा
स्यात् । नापि द्वितीयः । मध्यपरभागवर्तिसमस्तावयवप्रतिभास
संभवेनावयव्यप्रतिभासप्रसङ्गात् । अथ भूयो ऽवयवग्र
सत्यवयवी गृह्यतइत्युपगमस्तस्मिन्नपि समस्तस्मिन्नपि स
स्तावयवव्यापिनोऽवयविग्रहणात् । तथाहि—अर्वाग्भागभाव
यवग्राहिणा प्रत्यक्षेण परभागभाव्यवयवाग्रहणात् न ते
व्याप्तिरवयविनो गृहितुं शक्या । व्याप्याग्रहणात्तद्व्यापकस्या
गृहितुमशक्यत्वाद् ग्रहणे चातिप्रसङ्गः स्यात् । तत्र व्यवहित
वयवाप्रतिभासेऽप्यव्यवहितोऽवयवो प्रतिभातीति वाच्यम्
व्यवहितावयविस्वरूपावभासे तद्भिन्नावयविस्वरूपस्याप्यव
भासः स्यात्तथा तदन्यस्यापीति सर्वस्य सर्वावयविग्रहणप्रसङ्गात्
ततोऽव्यवहितावयवव्यापिरूपादर्वागवयवव्यापिनो ऽवयविस्
पस्य भेदप्रसङ्गः । तथाहि—यस्मिन्नवभासमाने यन्न प्रतिभासि
तत्ततो भिन्नम् । यथा घटादप्रतिभासमानः परान् प्रतिभाति
चार्वागवयव्यापिरूपे प्रतिभासमाने परावयवव्याप्यवयवि
रूपं तत्कथं न ततो भिन्नं तथाप्यतेर्भेदेतिप्रसङ्ग उक्तः

परभागावयवग्राहिणा तु प्रत्यक्षेण तद्ग्राह्ये वा ऽवयविस्वरूपं गृह्यते नार्वागवयवव्यापकमपि पूर्वोक्तनीत्येति । नापि स्मरणेनार्वाकारावयवव्याप्यवयविस्वरूपग्रहः । प्रत्यक्षानुसारेण स्मृतेः प्रवृत्तिरिति । नन्वीश्वरवादिमते न किंचित्कार्यं सिद्धमस्ति तथा यथाविधघटादिषु बुद्धिमता व्याप्तं दृष्टं अदृष्टकर्तृणामपि जीर्णतपादिषु बुद्धितत्कृतमिति बुद्धिमुत्पादयति न तथाविधं भूधरादिषु सिद्धं तदाह—विशेषेण न सिद्धं भूधरादिष्विति । नन्वेवं विकल्पने न किंचिदनुमानं स्यात् तथाहि—यथाविधो धूमो धूमध्वजपूर्वकत्वेन दृष्टान्ते दृष्टः न तथाविधसाध्यधर्मिणि सिद्ध इति । अथ धूमसामान्यसिद्धमत्रापि कार्यसामान्यमिति समानम् । ननु कार्यसामान्यात् कारणसामान्ये सिद्धेऽपि नेष्टसिद्धिः । न यथा वह्निसामान्यसिद्धिः, न यथावह्निसामान्यसिद्धौ तद्विशेषसिद्धिः तथा कारणसामान्यात् । कारणविशेषसिद्धौ कथं नेष्टसिद्धिः । सिद्ध्यतु यथा दृष्टे विशेषः । नहि धूमेनाप्यलौकिको वह्निः साध्यते तथेहापि दृष्टान्तदृष्टो विशेषः सिद्ध्यतु नतु नित्यबुद्ध्यादियुक्तः । अपि च नित्यायां बुद्धौ संबन्धाभावान्मत्वर्थीयोऽपि नोपपद्यते अनित्यत्वे तु तां यदि बुद्ध्यन्तरेण करोति तदा तामपीत्यनवस्था । अथ बुद्धिमन्तरेणापि करोति तदा न बुद्धिमत्पूर्वकं सर्वमिति व्याप्तिः । अकृष्टोत्पन्नयश्च वने वनस्पतयः कर्तारमंतरेणाप्युत्पद्यमाना दृश्यन्त इति क्व व्याप्तिः । अदृश्यत्वात्कर्तुस्तथेति चेत् । ननु किमदृश्यत्वात् किं वा अभावात्तथेतिसंदिग्धविपक्षवृत्तिको हेतुः पक्षेणाव्यभिचारादिति चेत् । येन येन व्यभिचारः तस्य तस्य पक्षीकरणेन कश्चिदहेतुः स्यात् । किं च पटेऽपि स एवादृश्यः कर्ता भवतु न कुलालस्तत्कथं तद्दृष्टान्तात्कर्तृसिद्धिः ।

कुलालस्य दृष्टत्वात् नान्यकल्पनेति चेत् । वनस्पत्यादिष्वपि दृष्टमस्तु किमदृष्टकल्पनया । अपि च यथाऽयं हेतुः कर्तारं साधयति तथेष्टविपर्ययमपि । तदाह । विरुद्धमित्यादि ॥

विरुद्धं वेष्टघातेन न कार्यं कर्तृसाधनम् ।
प्रकृतेरवरं ज्ञानं पुंसोनित्यत्वमन्यथा ॥

तथाहि–कुलालः शरीरी सरागोऽसर्वज्ञश्चेश्वरोऽपि तथा स्यात् । तथेश्वरः कर्ता न भवति । शरीररहितत्वात् । मुक्तात्मवदित्यपि स्यात् । अथ हेत्वन्तरेण किं प्राक्तनस्य हेतोरन्यतररूपाभावः ख्याप्यते, किं वा तस्मिन्नेव धर्मिणि विशेषः साध्यते । यथा शब्दे नित्यत्वे सिद्धेऽम्बरगुणत्वमिति । तत्र न तावदनेनान्यतररूपाभावः ख्याप्यते, नापि विशेषः साध्यमानो दोषमावहति । यदि साध्यविपर्ययसाधनेऽपि दोषस्तद न विरूद्धस्य हेतोर्दोषः स्यात् । अथ शरीरमवश्यमभ्युपेयते । यदि तन्नित्यं तदा रचनावत्सर्वं कार्यमिति न स्यात् । अथानित्यं तदा तदपि शरीरवताऽन्येन कर्त्तव्यं तदप्यन्येन शरीरेणेत्यनवस्था । किं चेदं चेतनवताऽचेतनस्याधिष्ठानं किं तद्धेतुकत्वं किं वा तदिच्छानुविधायीत्वमिति ? । तत्र सचेतनं यदा कर्म तदा किमीशेन प्रयोजनम् । अचेतनः कथं भावस्तदिच्छामनुवर्त्तते कुलालकरसंपर्कजन्यः कुम्भस्तदिच्छया दृष्टान्तेन भवन् दृष्टस्तदिच्छासाधनः कथम् । जगतः करणे चास्य यदि किंचित्प्रयोजनं ह्येयते । कृतकृत्यत्वं प्रेक्षाकारित्वम् । न चान्यथा ।

प्रेक्षावतां यतोवृत्तिर्व्यापास्ते कायवत्तया ।
प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते ॥
प्रयोजनं विनाप्यस्य कृपया यदि तत्क्रिया ।
सृजेच्च शुभमेवैकं कृपया परिचोदितः ॥

छागादीनां पुरीषादेर्वर्तुलीकरणेन किम् ।
क्रीडार्था तस्य वृत्तिश्च नार्थता स्यात् समाहिता ॥
किञ्चिन्मात्रविशुद्धोऽपि नार्यः क्रीडासु वर्तते ।
सत्त्वात्यन्तविशुद्धात्मा कथं क्रीडासु वर्तते ॥
एकस्य तदिका तृप्तिरन्यः प्राणैर्वियुज्यते ।
कर्मणां पारतन्त्र्येण यदि वास्य प्रवर्तनम् ॥
कर्मणामीशता प्राप्ता तत्कृत्यमनेन किम् ।
कर्मणां करणे वाऽस्य सामर्थ्यं यदि विद्यते ॥
शुभान्येव कृपायुक्तः किं न कारयते सदा ।
क्षमारूपं फलं यच्च भृत्ये नाथः प्रयच्छतः ॥
नासामर्थ्यं न वैकल्यं फलस्याप्युपलभ्यते ।
उक्तमत्र समर्थश्चेच्छुभं कारयतां सदा ॥
अथेदृशः स्वभावोऽस्य कोऽत्र पर्यनुयुज्यताम् ।
स्वभावश्चेदीदृशो नित्यः संहारं विदधाति किम् ॥
अथानित्यः सहेतुः स्यादहेतुश्चेति कल्पना ।
अहेतुर्यदि सर्वस्य स स्वभावः प्रसज्यते ॥
सहेतोर्हेतुरस्यास्तु स एवान्योऽथ कश्चन ।
यद्यन्यस्मात्र कर्तृत्वं स्वभावस्य विघातकम् ॥
तेनैव चेद्विधीयेत प्रसङ्गः पूर्ववद्भवेत् ।
किञ्चैककर्तृपूर्वत्वं जगतोऽनेककर्तृता ॥
संघातेनैकताव्याप्तिः प्रासादादिषु दृश्यते ॥
एकेन सूत्रितत्वं चेत्तत्रापि नियमो नहि ॥
स्वातन्त्र्येण क्वचित्तेषामेककार्ये प्रवर्तनात् ।
अनेककर्तृपक्षश्चेदात्मसिः किं न सिध्यति ॥
कुर्वन्तु खण्डमेकैकं तु ज्ञात्वाचन्द्रचूडवत् ।

ज्ञानवन्तोऽपि तेऽन्येन प्रेर्येत यदि कर्मणि ॥
सोऽप्यन्येन तदन्योऽपीत्यनेकेश्वरसङ्क्रमः ।
कोदोषश्चेद्भवेदेवं नैको विहितईश्वरः ॥
सर्वेषां परतन्त्रत्वादनीशत्वं कुलालवत् ।
तदेव कार्यतां हेतुं सर्वदोषैरुपद्रुतम् ॥
आश्रित्य जगतो हेतुं साधयन्तो निराकृताः ॥

इति निखिलविधानाधीनविज्ञानमस्य त्रिभुवननवतावग्राहि दूरान्निरस्तम् । तदिह सकलवस्तुज्ञानशून्यः स रागात्कपमिव दयिताङ्गासङ्गिनो मानतास्तु ।

एवमीश्वरस्य प्रामाण्यं निरस्य सांख्याभिमतस्य प्रकृतिपुरुषान्तरज्ञानस्य प्रामाण्यं निरस्यन्नाह—प्रकृत्यन्तरविज्ञानमित्यादि । ते ह्येवं मन्यन्ते केवलानन्दभोक्तृस्वरूपो हि पुरुषः प्रकृतिश्चाचिदात्मिका कथमसौ तां भुङ्क्ते केवलमज्ञानतमश्छन्नः प्रकृतिसाध्यमेवात्मगतंमन्यमानस्तत्सुखं दुःखं चोपभुङ्क्त इति। यदा ज्ञानमस्य भवति दुःखहेतुरियं न ममानया सह सम्प्रयुक्त इति तदा किमिति तदुपार्जितं कर्मफलमुपभुङ्क्ते । सापि च विज्ञानस्वरूपाहं मदीयं कर्मफलमनेन भोक्तव्यमिति बुद्ध्वा न किञ्चिदपि करोति । कुट्टनीव ज्ञानस्वरूपा दूरादुपसर्पति । अतः केवलज्ञानं मोक्षायालमिति । अथेदमभिधीयते कस्य तज्ज्ञानं किं प्रकृतेरथात्मन इति ? । न तावत् प्रकृतेरूपत्वादनाभ्युपगमाद्वा । अत एव निर्ज्ञाताहमनेनेत्यस्याः योचितकथनक्रमम् ॥ अथात्मनस्तदपि किं भिन्नमथाभिन्नम् ?। यद्यभिन्नं तदा तत्स्वरूपवन्नित्यं स्यात् तत आदित एव मुक्तो भवेत् । अत आह—सर्वदा मोक्ष इति ।

नित्यत्वे सर्वदा मोक्षो नित्यत्वे न तदुद्भवः ।

कालवैपुल्ययोगे तु कुशलाभ्याससंभवैः ॥ ८ ॥

अथ भिन्नम्। भिन्नमपि किं नित्यमथानित्यम्?। नित्यमपि किं संबद्धमसंबद्धं वा?। असंबद्धे सर्वस्य स्यात् ततश्च न कस्यापि संसारः। संबन्धोऽपि न नित्ययोः परस्परमनुपकार्योपकारकयोः स्यात्। संबंधेऽपि वा सदा मुक्तिरिति। अनित्यमपि किं जन्यमजन्यं वा?। तत्रानित्यमजन्यं चेति व्याहतम्। अव्याहतावपि सर्वस्य स्यात्। जन्यमपि किं प्रकृतिवियुक्तात्मजन्यं किं वा तत्सहितजन्यमिति?। प्रथमपक्षे इतरेतराश्रयत्वम्। तथाहि सति ज्ञाने प्रकृतिवियोगः, सति वियोगे तज्ज्ञानमिति। तत्सहितजन्यत्वे किं तद्वियोगेन। सर्वदा सर्वेषां च मुक्तिः स्यात् ननूक्तमज्ञानतमश्चन्न इति। तमोविरामेऽवश्यं विज्ञानमुपजायत इति। अथ किमिदं तमः?।रागादय इति चेत्। न, तेषां प्रकृतिधर्मत्वात्। न च साम्यावस्थायां तदुत्तरकार्यभाविनः प्रकृतावपि ते सन्तीति ब्रूमः। तथाहि—प्रकृतिरचेतना भोग्यरूपा सा भोक्तारमपेक्षते पुरुषोऽपि चेतनो भोक्ता च भोग्यमपेक्षते तयोरेते शक्तिरूपतया सन्तीति। शक्तिरूपतया सन्तीति चेत्। शक्तिरपि न कार्यकार्यं करोति किंतु स्वकार्यमेव करोति। न हि क्षीरे दधिशक्तिः दधिसाध्यं कार्यं करोति किंतु दध्येव करोति। दधि पश्चादात्मकार्यं करोति। पश्चाद्भवन्तु तथापि रागादयः सिद्धा इति चेत्। न, प्रधानस्य विकाराजनने सहकारिकारणाभावेन तेषां पश्चादप्यसिद्धेः। सन्तु वाऽविद्यारागादयस्ते मुक्तात्मनः किं न तमो भवति। अधिकारिण एव ते भवन्ति न मुक्तात्मान इति चेत्। किमिदमधिकारित्वं योग्यताकृतः संबन्धो वनगनयोरिव पङ्ग्वन्धयोर्ग्रामं जिगमिष्वोरिति। ननु सा योग्यता तयोर्नित्या न कदाचिदपि निवर्तेत न कदाचिज्ज्ञानो

त्पत्तिरिति–तदाह न तदुद्भवइति। न तस्य ज्ञानस्योद्भव उत्पत्तिःस्यादिति। नचाप्रच्युतानुत्पन्नस्थिरैकरूपस्यात्मनः स्वभावविगमो युक्तिमानिति न तस्य प्रागवत्केवलज्ञानं प्रमाणमिति स्थितिः ।

निरस्तकुमुदध्वान्ते जिनार्कोदयकाङ्क्षिणः ।

इदानीमुदयो यस्य तस्यायमभिधीयते । कालवैपुल्येत्यादि । तथाहि ।

जीवस्वाभाव्यतः सिद्धा गुणा गम्भीरतादयः ।
चरमे पुद्गलावर्ते भव्यत्वे पाकमागते ॥
रत्नत्रयाख्यं कुशलमवाप्याभ्यस्यतः क्रमात् ।
ज्ञानवृत्तिक्षयाज्ज्ञानमर्हतो जायतेऽक्षतम् ॥
शरीराद्भिन्नमात्मानं प्रत्यक्षं नैव वीयते ।
प्रामाण्यं नानुमानस्य सर्वमेतदसंगतम् ॥

ननु मानप्रमेत्येतद्वचनं चार्वाकचर्वितम् । किं प्रमाणमथान्यथा प्रमाणम् । कथमनुमाननिषेधायालम् । प्रमाणमपि नाध्यक्षम् । अनक्षजत्वात् । अथानुमानम् । तदेतत् पीतमद्यस्य प्रलपितम् । प्रतिपादयिष्यतेऽनुमानप्रामाण्यं प्रमाणद्भित्त्वसिद्धाविति । तदेवोपन्यसन्नाह । सहेतुकमित्यादि । अनेन प्रयोगार्थो दर्शितः । प्रयोगश्च यत् सहेतुकं तत् सर्वदास्ति । यथा पृथिव्यादिकं सहेतुकंचाहाराद्यासक्तिचैतन्यपर्यायं जीवद्रव्यमिति । एतत् साधयितुमनुमानमाह ।

आहारासक्तिचैतन्यं जन्मादौ मध्यवत्तथा ।
अन्त्यसामग्रिवद्धेतुः संपूर्णः कार्यकृत्सदा ॥

आहारासक्तीत्यादि । इहाहारग्रहणमुपलक्षणम् । इह चेतसो यदा शक्तिः सा तदाभ्यासपूर्वका । यथा यौवनाद्यव-

स्यायं रागाद्यासक्तिचित्तं तदभ्यासपूर्वम्। अस्ति च जन्मादावाहाराद्यासक्तिचैतन्यमिति कार्यहेतुः। तत्क्षणजातस्यापि स्तनपानशरीररक्षाद्युपलब्धेर्नासिद्धता हेतोः। सपक्षे सत्वान्न विरुद्धता, कार्यकारणभावसिद्धेर्नानैकान्तिकता। अनुगमस्य भावात् सदास्तित्वमात्मन इति। अथ कार्यकारणभावाऽव्यवस्थानात्कथमेतत्?। तथाहि–

धूमो धूमान्तरोत्पन्नो न धूमादेव सर्वथा।
शालूकादपि शालूकः कथं भवति गोमयात्॥

तथा–

चित्रं चित्रकराज्जातमेतत् त्रिष्वपि किं तथा।
तथाभ्यासाद्विशेषो यः सोऽन्यथापि भविष्यति।

तदसत्।

धूमो धूमाद्यथाभूतः सोऽन्यथापि न जायते।
अभ्यासात्तु विशेषो यः स जन्मादौ तथा स्थितः॥

ग्रामान्तराभ्यासवज्जन्मान्तराभ्यासानुपलब्धेर्न तत्कारणं चैतन्यं किंतु तदेव तस्योपलब्धेः। तस्मात्तदेव तदिति चेत्। एतद्गीताख्यानं कश्चद्गीतः किलान्येन स्पृष्टः। कथमसंभवः?।

मातुर्दीर्घविषाणस्य वृषभस्य कथं स्थिते।
स प्राह कुक्षेर्जायन्ते न मातुर्महिषादयः॥

हट्टागतानानैवैषा शून्येन क्रयविक्रयमात्रकम्। न च मातृपितृचैतन्यत्वेन चेतसः सिद्धसाध्यता वाच्या। अन्यथा सकलस्य व्यापित्वादिविशेषस्याप्यनुवर्त्तनं स्यात्। न चैहान्यसंस्कारोऽन्यस्य दृष्टः। उपाध्यायसंस्कारानुवर्त्तनं नुपलभ्यत इति चेत्। न, स्वसन्तानस्य पूर्वविज्ञानस्यैवाभिरुचिविशेदितस्य भावात्। अन्यथाऽदृष्टेः। ये चाचेतनात् काष्टादेरुपजायन्ते

दुत्पद्यत इति वाच्यम्। सर्वत्र कार्यकारणभावप्रसक्तेः। तथा च सति।

नित्यं सत्त्वमसत्त्वं वा ऽहेतोरन्यानपेक्षणात्।
अपेक्षातो हि भावानां कादाचित्कत्वसम्भवः॥

किं च तदुत्पद्यमानं चैतन्यं किं समस्तादुत्पद्यते, व्यस्ताद्वा ?। न तावत् समस्तात्। अङ्गुल्यादिच्छेदेऽपि मरणप्रसङ्गात्। अन्यथा शिरश्छेदेऽप्यमरणप्रसक्तेः। नापि व्यस्तात्। एकस्मिन्नेव कायेऽनेकचैतन्योत्पत्तिः प्रसङ्गात्। अस्त्वेकः शरीरावयवी ततएकमेव चैतन्यमुत्पद्यते। तदप्यसत्। आवृतानावृतत्वेन रक्तारक्तत्वेन चलाचलत्वेन च तस्य सम्भवात्। किञ्च शरीरस्यावैकल्यान्मृतशरीरेऽपि चैतन्योत्पत्तिःस्यात् अथ। वातादिदोषैर्वैगुण्यान्मृतशरीरस्य चैतन्योत्पादकत्वम्। नैतत्सारम्। यतो मृतस्य समीभवन्ति दोषास्ततो देहस्यारोग्यलाभात्पुनरुज्जीवनं स्यात्। तेषां समत्वमारोग्यं क्षयवृद्धिविपर्यय इति वचनात्। अथ समीकरणं दोषाणां कुतो ज्ञायते। चंक्षुरादिविकारादर्शनात्। अथ वैगुण्यकारिणि निवृत्तेऽपि नावश्यं तत्कृतस्य वैगुण्यस्य निवृत्तिः। यथाग्निनिवृत्तावपि न काष्ठाद्दाहस्यापि। तदपि न। यतः किञ्चित् क्वचिदनिवर्त्यविकारारम्भकं दृष्टं यथाकाष्ठेऽग्निः क्वचिच्च निवर्त्यविकारारम्भकं यथा सुवर्णे द्रवतायाः। तत्र यदि दोषविकारोऽनिवर्त्यः स्याच्चिकित्साशास्त्रं वृथैव स्यात्। ततो दौर्बल्यादिविकारस्येव महतोऽपि मरणविकारस्य निवृत्तिः प्रसज्येत। अथ चिकित्साप्रयोगाद्दौर्बल्यादिनिवृत्त्युपलब्धेः प्रत्यानेयविकारत्वमसाध्यत्वादनुपलब्धेरप्रत्यानेयविकारत्वं चेत्युभयथाभावान्मरणानिवृत्तिः। तदसत्।

वातादिधातुवैषम्यादसाध्यः किञ्चिदीरितम् ।
आयुःक्षयाद्वा दोषे तु केवले नास्त्यसाध्यता ॥

तथा हि—तेनैव व्याधिना कश्चिन्नेति नेदमसमञ्जसं केवले दोषे विकारकारिणि घटते । तस्मात्कर्माधिपत्यमेवात्र परिहारः । अन्यथा मृते विषादिसंहारात्तद्दंशच्छेदतोऽपि वा । विकारहेतोर्विगमेनने।च्छ्रन: । किञ्चोपादानविकारमन्तरेण नोपादेयस्य विकारो दृष्टः । यथा मृद्विकारमन्तरेण न कुण्डस्य इह तु स्वस्थेऽपि देहे भयशोकादिना मनोविकारदर्शनान्न देहस्योपादानता । शरीरविकारेणापि चेतसि विकारोपलब्धेः तदुपादानमिति चेन्न । पुत्रेण व्यभिचारात् । नियमाभावाच्च । यथा हि चित्तविकारमन्तरेण नोत्तरचेतसो विकारो नैवं शरीरे नियमः ।

अवस्थाकारणं यत्तु तदुपादानकारणम् ।
अवस्थाकृन्निवृत्तौ हि सैवावस्था निवर्त्तताम् ।
सन्तानकारणं यत्तु तदुपादानकारणम् ॥
तन्निवृत्तौ भवेत्तस्य सन्तानस्य निवर्त्तनम् ।
अग्नेर्निवृत्तौ हेम्नस्तु द्रवतैव निवर्तते ॥
चेतसः सह कायेन तावत्कालमवस्थितिः ।
अन्योन्यसहकारित्वादग्नितात्र द्रवत्ववत् ॥
तयोर्हेतोरकार्यं तु चित्तं तिष्ठति हेमवत् ।

तच्चित्तमेव चेतसउपादानं न शरीरमिति । नापि चक्षुरादिनियतम् । मनःसमाश्रितान्येव चक्षुरादीन्युपलभ्यन्ते न मनस्तदाश्रितम् । यस्मान्नियमेन भयशोकक्रोधादिनोपहते मनसि चक्षुर्विकारो दृश्यते न तु सात्विकानां चक्षुरादिविकारोऽपि मनोविकारः । कादाचित्कस्तु मनसो विकारः । पुत्रेन्द्रियविकारेऽपि पितुरुपलब्धेरिति न ततो व्यभिचारः । न च

यथाग्नेर्विकारमासाद्य घटादिवस्तु तत एव नोत्पद्यते तथे-न्द्रियाणीति वाच्यम् ।

यतः

घटादिरन्यथा दृष्टस्ततो न तत एव सः ।
नान्यथा तु पुनर्दृष्टमिन्द्रियं तद्विकारतः ॥

किं च चक्षुरादिभ्यः किमेकैकशो मनोविज्ञानमुत्पद्यते, समस्तेभ्यो वा?। प्रथमपक्षे नियतविषयमनोविज्ञानं स्यात्। रूपादिदर्शनादिवत् । द्वितीये तु नान्धवधिरादेर्मनोविज्ञानं स्यात् । न हि बीजादिभ्यःसमस्तेभ्यः समुत्पद्यमानोऽङ्कुरस्तदेकापाये उत्पद्यते । तन्न चक्षुरादिकार्यता । नापि प्राणापानकार्यता । प्राणापानौ हि मनोविज्ञानान्वयव्यतिरेकानुविधायिनौ । न मनोविज्ञानं तदन्वयव्यतिरेकानुविधायि। अन्यथा मूलाविच्छेदे चैतन्यं न स्यात् । तत्कार्यतामन्तरेण मनोज्ञानवश्यता च तयोर्न स्यात् । न खल्वन्याधीनमन्येन वशयितुशक्यम् । अथान्यत उत्पन्नोऽप्यन्येन नियम्यते । यथा स्वामिना भृत्यः । तदप्यसत् ।

भृत्यस्यान्यत उत्पत्तिर्दृश्यते न पुनस्तयोः ।
न चित्तमन्तरेणास्ति तयोरुत्पत्तिरन्यतः ॥

अथ स्वापावस्थायां प्राणापानौ चित्तमन्तरेणापि दृश्येते तत्कथं तत्कार्यौ ?। तन्न । निद्राभिभूतस्य तदापि भावात् ।

शरीरचेष्टा यावत्यस्ताः स्वापाः चित्तसंस्कृताः ।
सुप्तस्य दीर्घह्रस्वादिनिश्वासाः पूर्वचित्ततः ॥

न हि चैतन्यमन्तरेण प्रेरणाकर्षणे भवतः । न च प्रेरणाकर्षणे एव चैतन्यात् प्राणापानाविति । तत्स्वरूपव्यतिरेकेण प्रेरणाकर्षणयोरभावात् । अथ स्थिरो वायुः प्राणापानयोर्हेतुस्तथचेतना। तदप्यसत्। मृतस्यापि स्थिरो वायुरस्तीति प्राणा-

एव तेन कृतः स्यान्न भावस्ततोऽनाशात्स्वयमेवास्त इति किं स्थितिहेतुना । यदि च नाशहेतोर्नानाशो यावन्नाशको नायाति तावत् स्वयमेवास्त इति किं स्थिहेतुना । अथ विनाशकात् पूर्वं स्थापकेन विनाशप्रतिबन्धः क्रियते । ननु सोऽपि विनाशप्रतिबन्धोऽन्यो विनाश्यात् । ततो विनाश्यस्य न किंचिदिति विनश्येत् । अथानन्यस्तर्हि विनाश्यः स्थापकेन क्रियते न स्थितिः । अथ प्रतिक्षणविनश्वरः स्थापकादन्यथा भवति तस्य विनाशोऽहेतुक इति स एव प्रतिक्षणाविनाशः स चान्यथास्थापकादुत्पन्न इति करणमेव स्यान्न स्थापकः । अथ पततो धारणोपलब्धेः कथं न स्थापकः? । न पततो धारणं यस्य च धारणं न तस्य पतनम् । पतनापतनयोः परस्परविरोधात् । पूर्वं पतनं पश्चादपतनमिति चेत् । तर्हि यस्य पतनं तस्य धारणम् । प्रत्यक्षेणैकत्वाप्रतिपत्तेः । न ह्येकोऽवस्थानपतने कस्याप्युपलभ्यते । स एव पतन्नवतिष्ठत इति एकत्वाभिमानादवस्थातुः प्रतीतिरिति चेन्न । प्रत्यभिज्ञानस्याभिमानमात्रत्वात् । ततः प्रतिक्षणविनाशिना परपरादेशोत्पादवतामुपादानदेशोत्पत्तिराधारसमागमकृतेति हेतुरेव विशिष्टावस्थाया आधार उच्यते । किंच गुरुणो द्रव्यस्य पततः पातप्रतिबन्धात् स्थापकः स्यादपि निष्क्रियाणां तु गुणसामान्यकर्मणां किमाधारेण । चैतन्यं च सामान्यं गुणः कर्म वा । तच्च सर्वथा निष्क्रियमिति नाधारेणास्य किंचित् । अतोऽनापेयस्य चेतसो नाशे न विनाशः कियत्कालं तु सहस्थानमात्रकम् । अग्निताम्रद्रवत्ववदित्युक्तम् । तच्च कायाश्रितं चेतः । नापि कायात्मकम् । यतः परमाणुसंघातमात्रमेव शरीरम् । तस्मादात्मनि प्रत्येकं सकलपरमाणुसंवेदनप्रसङ्गः स्यात् । न चावयवी संविद्यते । तत्सद्भावेऽपि वा श्यामतादिवदन्येन चैतन्ये वेदनं स्यात् । अन्तःस्पष्टव्यरूपत्वान्नेति चेत् । न, व्रणं स्पृशतोऽन्यस्यापि तद्वेदनावेदनं

स्यात् तच्छरीरे गृह्यमाणे चैतन्याग्रहणाद्विरुद्धधर्माध्यासेन ता दात्म्यम्। तन्न देहकार्यं देहगुणो देहात्मकं चैतन्यं किन्तु जन्मान्तरचैतन्योपादानमेव जन्मादिजन्यचैतन्यपर्यायं जीवद्रव्यमिति अथ कथं परलोकशरीराच्छरीरान्तरसंचारः। वृद्धादिशरीरावस्थासंचारवत्?। अथैकोपादानभावेन तदेकत्वान्न शरीरान्तरम् पश्वादिशरीरं तु नैवम्। तदपि स्वाप्निकशरीरसंचारदर्शनादनैकान्तिकम्। किंच शरीरान्तरे मनः संक्रान्तिः कथञ्चिद्ग्राहकत्वेनैव नान्यथातः। सा चेह पश्वादिशरीरेष्वप्युपलभ्यते। तत्कथं न शरीरान्तरसंचारोपलब्धिः। अथाग्राह्यतामात्रे संचारे परशरीरवत्स्वशरक्षतावपि न व्याकुलतादयः स्युः । तदप्यसत् । पररक्तादिदर्शनेऽपि केषाञ्चिद्व्याकुलतोपलब्धेरात्मशरीरक्षतावपि केषाञ्चिदभावात् । तदानेकजन्मपरम्परावासनादार्ढ्यादात्मीयग्रहसद्भावे व्याकुलतादयः प्रवर्त्तन्तइति । अथ भवतु कार्यादतीतपरलोकानुमानं भाविनस्तु कथं तदर्थावदनादिक्रियेष्यते?। तदपि यत्किञ्चित्। सिद्धे हि कार्यकारणभावे यथा कार्यात् कारणानुमानं तथाऽविकलकारणात्कार्यस्यापि इत्यनैकान्तिकत्वादिदूषणं नैव संभवति ।

कार्यकारणसद्भाच्चैतन्येनान्यचेतसइति ।
एवं क्षणिकपर्यायपरिणामिनि संस्थिते ॥
गुणाः प्रकर्षमायान्ति कालेन सहकारिणा ।
इति निगदितमेतत् केवलज्ञानहेतुः
कुशलमखिलग्रन्थो ज्ञानचारित्रदृष्टिः ।
सकलमलविहीनं साधनं तस्य सिद्धै
कथयितुमिदमन्यद्वार्तिकस्याह कर्ता ॥

अन्त्यसामग्र्यवद्धेतुरित्यादि । हेतुः कारणकलापः । संपूर्णस्त्यविकलः । सदेत्यवश्यमेव कार्यकारी ।

स्यात् तच्छरीरे गत्वा नाशो चैतन्यापकर्षाद्भिन्नधर्माध्यासेन तादात्म्यम्। तन्न देहकार्यं देहगुणो देहात्मकं चैतन्यं किन्तु जन्मान्तरचैतन्योपादानमेव जन्मादिजन्यचैतन्यपर्यायं जीवद्रव्यमिति। अथ कथं परलोकशरीराच्छरीरान्तरसंचारः। वृद्धादिशरीरात्तस्या-संचारयत्?। यथैकोपादानभावेन तदेकत्वान्न शरीरान्तरम्। पश्वादिशरीरं तु नैवम्। तदपि स्वाप्निकशरीरसंचारदर्शनादनैकान्तिकम्। किंच शरीरान्तरे मनः संक्रान्तिः कथंचिद्ग्राहकत्वेनैव नान्यथातः। सा चेह पश्वादिशरीरेष्वप्युपलभ्यते। तत्कथं न शरीरान्तरसंचारोपलब्धिः। अथाज्ञातमात्रे संचारे परशरीरवत्स्वशरीरक्षतावपि न व्याकुलतादयः स्युः। तदप्यसत्। पररक्तादिदर्शनेऽपि केषाञ्चिद्व्याकुलतोपलब्धेरात्मशरीरक्षतावपि केषाञ्चिदभावात्। तदानेकजन्मपरम्परावासनादार्ढ्यादात्मीयग्रहसद्भावे व्याकुलतादयः प्रवर्त्तन्तइति। अथ भवतु कार्यादतीतपरलोकानुमानं भाविनस्तु कथं तदर्थावदनादिक्रियेष्यते?। तदपि यत्किञ्चित्। सिद्धे हि कार्यकारणभावे यथा कार्यात् कारणानुमानं तथाऽविकलकारणात्कार्यस्यापि इत्यनैकान्तिकत्वादिदूषणं नैव संभवति।

कार्यकारणसद्भावाच्चैतन्येनान्यचेतसइति।
एवं क्षणिकपर्यायपरिणामिनि संस्थिते॥
गुणाः प्रकर्षमायान्ति कालेन सहकारिणा।
इति निगदितमेतत् केवलज्ञानहेतुः
कुशलमखिलबन्धो ज्ञानचारित्रदृष्टिः।
सकलमलविहीनं साधनं तस्य सिद्धै
कथयितुमिदमन्यद्वार्तिकस्याह कर्ता॥

अन्त्यसामग्र्यवद्धेतुरित्यादि। हेतुः कारणकलापः। संपूर्णस्त्वविकलः। सदेत्यवश्यमेव कार्यकारी।

मेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनायेति, था विश्वतश्चक्षुरुत विश्वतो मुखो विश्वतो बाहुरुत विश्वतः पात् । सम्बाहुभ्यां धमति सम्पतत्रैर्द्यावाभूमी जनयन् देव क आस्ते इत्यादेर्विद्यमानत्वादिति चेत् । न, स्तुतिमात्र-वादेवेषां न प्रामाण्यमिति । तथा चाह–

न च मन्त्रार्थवादानां तात्पर्यमवकल्पते ।
न चार्थेनाप्रधानैस्तैस्तदस्तित्वं विधीयते ॥
न चानुवदितुं शक्यं पूर्वमन्यैरबोधितम् ।
अनादिरागमस्यार्थो न च सर्वज्ञ आदिमान् ॥
कृत्रिमेण त्वसत्येन स कथं प्रतिपद्यते ।
अथ तद्वचनेनैव सर्वज्ञोऽन्यैः प्रतीयते ॥
प्रकल्पेत कथं सिद्धिरन्योन्याश्रययोस्तयोः ।
सर्वज्ञोक्ततया वाच्यं सत्यं तेन तदस्तिता ॥
कथं तदुभयं सिद्ध्येत् सिद्धमूलान्तरादृते ।
असर्वज्ञप्रणीतात्तु वचनान्मूलवर्जितात् ॥
सर्वज्ञमगच्छन्तः स्ववाक्यात् किं न जानते ।
सर्वज्ञसदृशं कश्चित् यदि पश्येम संप्रति ॥
उपमानेन सर्वज्ञं जानीयामस्ततो वयम् ।
उपदेशो हि बुद्धादेः धर्माधर्मादिगोचरः ॥
अन्यथा नोपपद्येत सर्वज्ञो यदि नाभवत् ।
बुद्धादयो ह्यवेदज्ञा तेषां वेदाद्यसंभवः ॥
उपदेशः कृतोऽतस्तैर्व्यामोहादेव केवलात् ।
येऽपि मन्वादयः सिद्धाः प्रधानेन त्रयीविदः ॥
त्रयीविद्याश्रितग्रन्थास्ते वेदप्रभवोक्तयः । तदेवम् ।
प्रामाण्यभङ्गकं यत्र वस्तुरूपेण ज्ञायते ॥

वस्तुसत्तावबोधार्थं तत्राभावप्रमाणता ।
तथोपमानबाधिता तथाहि—
नरान् दृष्ट्वा त्वसर्वज्ञान् सर्वानेवाधुनातनान् ॥
तत्सादृश्योपमानेन तस्यासर्वज्ञसाधनमिति ॥

तदेवमनुमानाभावप्रमाणोपमानबाधितेयं प्रतिज्ञेति । भवतु वा तथापि निष्फला तथापि समस्तावयवव्यक्तिविस्तरज्ञानसाधनं काकदन्तपरीक्षावत्क्रियमाणमनर्थकम् । यथा चक्षुषा सर्वभावान् वेत्तीति फलं सर्वदर्शित्वप्रतिज्ञाप्यफला । तथा ।

स्वधर्माधर्ममात्रज्ञसाधनप्रतिषेधतः ।
तत्प्रणीतागमग्राह्यहेयत्वे हि प्रसिद्धितः ॥
कुत्र सर्वजगत्सूक्ष्मभेदज्ञत्वप्रसाधने ।
अस्थाने क्लिश्यते लोकः संरम्भाद्ग्रन्थवादयोः ॥
एतच्च फलवज्ज्ञानं यावद्धर्मादिगोचरे ।
न तु वृक्षादिभिर्ज्ञातैरस्ति किञ्चित्प्रयोजनम् ।
क्रत्वर्थाः पुरुषार्थाश्च यावन्तः खदिरादयः ॥
सर्ववृक्षज्ञता तावत्तावत्स्वेव समाप्यते ।
लतासोमगुडूच्याद्याः काश्चिद्धर्मार्थहेतवः ॥
सिद्धान्तज्ञानमात्रेण लतासर्वज्ञतापि नः ।
व्रीहिश्यामाकनीवारग्राम्यारण्यौषधीरपि ॥
ज्ञात्वा भवति सर्वज्ञो नानर्थकगतास्वपि ।
तथा कतिपयेष्वेव यज्ञाङ्गेषु तृणेष्वपि ॥
दर्भादिषु च बुद्धेषु तृणसर्वज्ञतेष्यते ।
तृणौषधिलतागुल्मजातयोऽन्याः सहस्रशः ॥
त्रिविद्या नोपयुज्यन्ते तदज्ञानेन नाज्ञता ।
यत्रापि चोपयुज्यन्ते व्यत्ययोऽनिरूपिताः ॥

जातिज्ञानोपसंहारात्तत्रापि व्याप्तिरस्ति नः ।
अतश्च व्यक्तिभेदानामनभिज्ञोऽपि यो नरः ॥
सर्वज्ञत्वफले प्राप्ते सर्वज्ञत्वं न वाञ्छते ।
जरायुजाण्डजोद्भिदसंस्वेदजचतुर्विधे ॥
भूतग्रामेऽल्पज्ञोऽपि सर्वज्ञफलमश्नुते ।
पृथिव्यादिमहाभूतसंक्षेपज्ञश्च यो नरः ॥
सविस्तरानभिज्ञोऽपि सर्वज्ञान्न विशिष्यते ।
भूमेर्य एकदेशज्ञो भूमिकार्येषु वर्त्तते ॥
सप्तद्वीपमहीज्ञानं क्व नु तस्योपयुज्यते ।
तथाऽल्पेनैव तोयेन सिद्धं तोयप्रयोजनम् ॥
तोयान्तराण्यविज्ञाय नाज्ञदोषेण युज्यते ।
वह्नेश्चानन्तभेदस्य ज्ञातस्योपासनादिभिः ।
पञ्चभिःकृतकार्यत्वादस्याज्ञानमदूषणम् ॥
शरीरान्तर्गतस्यैव वायोः प्राणादिपञ्चके ।
ज्ञाते शेषानभिज्ञत्वं नोपालम्भाय जायते ।
व्योम्नश्च पृथुनः पारमज्ञात्वाप्येकदेशवित् ॥
न च व्योमानभिज्ञत्वव्यपदेशेन दुष्यति ।
धर्मकीर्त्तिनाप्युक्तम् ।

ज्ञानवान् मृग्यते कश्चित्तदुक्तप्रतिपत्तये ।
अज्ञोपदेशकरणात् विप्रलम्भनशङ्किभिः ॥
तस्मादनुष्ठेयगतं ज्ञानमस्य विचार्यताम् ।
कीटसंख्यापरिज्ञानं तस्य न क्वोपयुज्यते ॥
हेयोपादेयतत्वस्य साभ्युपायस्य वेदकः ।
यः प्रमाणमसाविष्टो न तु सर्वस्य वेदकः ॥
दूरं पश्यन्तु वामा वा तत्वमिष्टं तु पश्यतु ।

साधनं नियमाभावात्तेनाकिञ्चित्करं हि तत् ।
नरः कोऽप्यस्ति सर्वज्ञः स तु सर्वज्ञइत्यपि ।
साधनं यत्प्रयुज्येत प्रतिज्ञामात्रमेव तत ।
सिषाधयिषितो योऽर्थः सोऽनया नाभिधीयते ।
यस्तूच्यते न तत्सिद्धौ किञ्चिदस्ति प्रयोजनम् ।
यदीयागमसत्यत्वसिद्धौ सर्वज्ञतोच्यते ॥
न सा सर्वज्ञसामान्यसिद्धिमात्रेण लभ्यते ।
यावद् बुद्धो न सर्वज्ञस्तावत्तद्वचनं मृषा ॥
यत्र क्वचन सर्वज्ञे सिद्धे तत्सत्यता कुतः ।
अन्यस्मिन्न हि सर्वज्ञे वचसो ऽन्यस्य सत्यता ॥
समानाधिकरण्ये हि तयोरङ्गाङ्गिता भवेत् ।
तदेव दोषदुष्टस्य पक्षस्यास्य न पक्षता ।
इदानीं हेतुदोषेण हेतोर्दूषणतोच्यते ॥
वचसोऽपौरुषेयत्वं पूर्वमेवस्थितं यदा ।
नष्टमुष्ट्यादिकं नैव कृतं पुंसास्ति किञ्चन ।
एवं तावदसिद्धत्वमनैकान्तिकता तथा ॥
पारम्पर्योपदेशेन वचसः संप्रवर्त्तनात् ।
असत्यार्थं च तद्वाच्यं तेन हेतोर्विरुद्धता ।
एवं सर्वज्ञतासिद्धिः कथं चिन्नोपपद्यते ॥

इति । अत्रोच्यते ॥

देशोत्पाद्यापि मानानि मीमांसादोषवाहिनी ।
सहैव दशभिः पुत्रैर्भारं वहति गर्दभी ॥
यत्साध्यसाधनायोक्तं प्रमाणदशकं परैः ।
प्रामाण्ये तद्विपक्षस्यैषा बहु स्यादसमञ्जसम् ॥

तथाहि—

ऽत्यनवस्था । किं चासावेकोऽनेको वा?। एकश्चेत् सर्वपुरुषाणां नियोगप्रतीतिः स्यात्। अथ विपर्ययान्न परस्येति चेत्। नावापि पक्षपातादिति समानम्। अनेकश्चेत्। प्रतिपुरुषमसाधारणतया न सङ्केतक्रिया स्यात्। किं च शब्दप्रमाणैकसमधिगम्यतया सत्त्वे आकाशकुसुमस्यापि सत्त्वमापद्येत। विशेषो वा वक्तव्यः। न च शब्दप्रवृत्तिमात्रेण सत्त्वं युज्यते। अन्यथाद्वारः पत्तनगरीत्यादावपि समासज्येत। तत्र कश्चित्स्वतन्त्रो नियोगो वाच्यार्थः प्रतीयते। परतन्त्रोऽपि किं तत्कार्यतया धर्मतया वा?। न तावत् प्रथमः पक्षः। यतः किमसौ यागकार्यः, नियोगकार्यः, शब्दकार्यो वा?। न तावत् यागकार्यः। तस्य तदानीमनिष्पन्नत्वेनाभावात्। नापि पुरुषकार्यः। पुरुषस्य पूर्वमपि सद्भावेन तद्भावप्रसङ्गात्। नापि शब्दकार्यः। तदा हि न शब्दस्य वाच्यः स्यात्। कार्यत्वात्। न च वैदिकस्य शब्दस्य नित्यत्वेन क्रमयौगपद्याभ्यां जनकत्वं युज्यते। तद्धर्मतायामपि किमसौ यागधर्मः, पुरुषधर्मः, शब्दधर्मो वा?। न तावद्यागधर्मः। तस्याविद्यमानत्वेन तद्धर्मस्याप्यविद्यमानविषयवाच्यं निरालम्बनमपोह्यमात्रविषयमेव स्यात्। नापि पुरुषधर्मः। तथाहि-पुरुषाद् व्यतिरिक्तः स्यादव्यतिरिक्तो वा? व्यतिरिक्ते पुरुषस्य सर्वथानिष्पन्ननियोगरूपता स्यात्। नियोगेन ह्यनुष्ठेयोऽर्थोऽभिधीयते निष्पन्नस्य चानुष्ठानेनानुष्ठानविरतिर्भवेत्। निष्पन्नस्यापि किञ्चिदनिष्पन्नमस्ति। तन्न। निष्पन्नानिष्पन्नयोर्विरोधेन तादात्म्याभावप्रसङ्गात्। अथ व्यतिरिक्तो वा। ननु यावदसौ तस्य धर्मस्तावदन्यस्य किं न भवति। तस्यैवाधारशक्तिर्नान्यस्येतिचेत्। सापि किं नान्यत्राभिधीयते। तां प्रति तस्यैव वाधारशक्तिर्नान्यस्येत्यभ्युपगमेऽनवस्था। न च हेतुफलाभावादन्योऽव्यतिरेकसंबन्धोऽस्ति।

ग्राहकं वेति यो दोषः सोऽतीन्द्रियदृशः कुतः ॥
अथातीन्द्रियविज्ञानं न दृष्टं केनचित् क्वचित्।
विनिन्द्रियं च वैशद्यं कुतस्तस्य भविष्यति ॥
सर्वदेशेषु राष्ट्रेषु सर्वज्ञानेति योऽवदत्।
तस्य सर्वज्ञताप्राप्ता सिद्धं चास्मत्समीहितम् ॥
कामादिभावनाजातं विज्ञानं विशदं यदा।
तदेन्द्रियसमुत्थत्वं वैशद्येनोपयोगवत्।
अस्याश्रितत्वमध्यक्षे व्युत्पत्तेरेव कारणम् ॥
निमित्तं तु पुनस्तस्य वस्तुसाक्षात्क्रिया मता।
तदेवं जैनमध्यक्षं नानुमानेन बाधितम् ॥
न प्रमाणमभाव्यं हि बाधकं कुत एव तत्।
सर्वसंबन्धिवाध्यक्षं नेति तत्रेति यो वदेत् ॥
तस्य सर्वज्ञता प्राप्ता नैकस्यास्य निषेधकृत्।
अनुमानं निषेधाय यद्यत्रेन्नास्य किञ्चन ॥
असिद्धावाश्रयासिद्धिः सिद्धौ हेतोर्विरुद्धता।
अर्थः केनोपपद्येत विनाऽसर्वज्ञतां तव ॥
अपौरुषेयता नो चेच्चास्यं पूर्वं निषेधनात्।
नोपमानस्य मानत्वं बाधकं कुत एव तत्।
विशेषाः पुंसु दृश्यन्ते तेनादृष्टेषु का कथा।

तथा हि—केचित्सकलशास्त्रज्ञाः, केचिच्च किञ्चिद्विदन्ति, केचिच्चतुर्वेदपाठकाः, केचिद्गायत्रीमपि न पठन्ति, तत्कथमदृष्टेषु पुरुषेषु साम्यं सिध्येत्? । ननूक्तं दशहस्तान्तरमित्यादि।

तदसत्तुल्यजातीयपूर्वबीजप्रवृत्तयः।
ज्ञेयेषु बुद्धयस्तासां सत्यभ्यासे कुतः स्थितिः।

अर्थापत्तेर्न मानत्वं नियमेन विना कृतम् ॥ ३०

इह यथा गौस्तथा गवयो यथा गवयस्तथा गौरित्युपमानम् । न तावद्गोगवयव्यक्तिविषयमस्य प्रामाण्यम् । तस्याः प्रत्यक्षेण प्रतिपन्नत्वात् । सादृश्यविषयमिति चेत् । महिषगवयवैलक्षण्ये मानान्तरं स्यात् । सादृश्याभावरूपत्वाद्वैलक्षण्यस्य नेति चेत् । वैलक्षण्याभावरूपं सादृश्यं किं न भवति? । अपि च किमिदं सादृश्यम्? । न तावत्सामान्यम् । विजातीयस्य तस्याऽनभ्युपगमात् । अथ धर्मसाधकत्वं सादृश्यं, तत्संज्ञाकरणं चोपमानफलं तथा गवाभावे गवयोपलम्भेऽपि तथाविधधर्मोत्पत्तिरिति, तर्हि मृतमिदानीं भट्टसामान्यं, जीवितं सौगतसामान्यम् । सौगतस्याऽपि हि वाह दोहाद्येकार्थक्रियाकारित्वं सामान्यनिबन्धनं, तद्दर्शिनो गोव्यक्तिषु सामान्यमन्तरेणापि संज्ञाकरणमुपपत्स्यत इति किं तत्कल्पनया? । यच्च धर्मसाधकत्वं हिंसायामपि, तदलं पापकथयेति । एवंविधेन च कल्पितेनार्थेनार्थत्वे प्रमाणेयत्ता न स्यात् । तन्नोपमानं विषयवत् ॥ तदेवमुपमानस्य प्रामाण्यं निरस्याऽर्थापत्तेर्निरस्यन्नाह—अर्थापत्तेरित्यादि । इह पूर्वं सति नियमेऽनुमानत्वं प्रत्यपादि, इदानीमनियमे तस्याः प्रमाणत्वं चक्षुर्दृष्टान्तेन प्रतिपादितं निराक्रियते । चक्षुषोऽपि हि रूपे एकसामग्र्यधीनतालक्षणोऽस्त्येव नियमः । अन्यथा यतः कुतश्चिदन्यत्सर्वं प्रतीयेत, न चैवमिति । नियमेन विना कृतं-रहितं नाऽर्थापत्तेः प्रमाणत्वमिति । अत एवास्याः षड्भेदकथनमसत् । तथा हि—हस्तस्फोटादेर्वह्नेर्दाहकशक्तिज्ञानकार्यानुमानान्न भिद्यते । न च शक्तिः काचिदस्ति । दाहस्वरूपमेव हि मन्त्रादिना तिरस्क्रियते । अन्यथा किं तस्य रूपं स्यात् ? । तन्न प्रत्यक्षपूर्विकाऽर्थापत्तिः । नाऽ-

अनुमानेन ग्रहणेऽनवस्था, सैवं न भवेद्यदि मूलभूतं तद्ग्राहकं क्वचिदुपेयते ॥ नापि सामान्यतो दृष्टाल्लिङ्गात्तदवगतिः ॥ कार्यादेर्लिङ्गस्याभावात्, अनुपपद्यमानस्य चाभावादर्थापत्तिरिति न। नाप्यागमस्तत्र प्रतिपादकः। तस्य लौकिकवैदिकभेदेन द्विधा स्थितत्वात्। लौकिकस्य प्रत्यक्षानुमाननिषेधेन निषेधः, वैदिकस्याप्यनुष्ठेयविषयप्रतिपादकस्य न तत्प्रतिपादने व्यापारः। यदपि वैदिकं वचोऽसद्वाइदमग्र आसीदित्यादि। तदर्थवादत्वेन स्वरूपप्रतिपादकं न भवति इति व्याख्यातम्। नाप्युपमानस्याऽभावो विषयः। तस्य द्विविधस्यापि प्रमेयान्तरप्रतिपादनात्,। एतच्च तत्प्रत्यक्षनिषेधेनाऽनुमानमभ्युपगम्योक्तं न तु तत्प्रतिपत्तेः किञ्चिल्लिङ्गमस्ति। न तावद्भावः। तेन सह पूर्वं क्वचिदप्यदृष्टत्वात्। दर्शनेऽपि व्यभिचारसम्भवात्,। यत्र यदभावो गृहीतस्तत्र तद्भावस्याऽपि क्वचिद्ग्रहणात्। अव्यभिचारे वा तयोर्यस्मादेव व्याप्तिग्राहकात् प्रमाणात्तदवगमस्तदेव प्रमेयप्रतिपत्तौ निमित्तं भविष्यतीति किं भावाख्येन लिङ्गेन?। एतेन तत्प्रतिपत्तिरप्यभावलिङ्गत्वेन निराकृता। नाप्यनुपलब्धेः प्रतिषिध्यमानवस्त्वग्रहणस्वभावाया लिङ्गता। तस्याः स्वरूपानिश्चयात्। न तावत् प्रतिषिध्यमानवस्तूपलब्धिप्रतिषेधोऽनुपलब्धिः। तस्या अभावत्वेन ग्रहणासम्भवे लिङ्गत्वानुपपत्तेः। न च तथाविधेनान्येन लिङ्गेन तद्ग्रहणम्। अनवस्थाप्रसङ्गात्। न चागृहीताया लिङ्गता। भवतु वा तस्याऽग्रहणं, तथाऽपि स्वसाध्येन सम्बन्धग्रहणं पूर्वं वक्तव्यम्। न हि पक्षधर्मत्वनिश्चयमात्रादनुमेयप्रतिपत्तिः। सम्बन्धग्रहणाभ्युपगमे वा तत्र प्रमाणं वक्तव्यम्। न तावत् सैव प्रमाणम्। तद्व्यतिरिक्तेनान्येन तयोः सम्बन्धग्रहणाभ्युपगमात्। न हि धूमाग्न्योः प्रतिब-

न भवति। न च तथाऽभिन्नभावेन विरोधमपेक्षते। तस्यान्य विरोधिजन्यत्वात्। अथोच्यते। यथा मुद्गरापेक्षयाऽसौ घटो न भवति, तथा संबन्धाभावापेक्षया न भविष्यतीति किमत्रानुपन्नम्?। नन्वेतदेव, यत्तयोरसमानकालत्वम्। समानकालत्वे हि तयोर्विरोधाविरोधौ चिन्त्येते। नन्वेवमेवापि च मुद्गरादिवत्तस्य विरोधकत्वाभ्युपगमेऽनवस्थाप्रसक्तिः। यथा मुद्गरो घटस्याभावजनकत्वात्तद्विरोधी, एवमभावोऽप्यभावान्तरजनकत्वेन। न च तदप्येवमित्यनवस्था। न वा किञ्चित्करादेरूपपन्नस्य पदार्थान्तरस्य तथात्वव्यपदेशः। तत्र भावाभावयोर्विरोधोऽपि संबन्धः। किं च तस्य शास्त्रे कार्यकारणभावत्वेन स्थापितत्वान्मुद्गराद्यपेक्षा, तस्याऽसमर्थतरासमर्थतमेत्यादि। न तु तस्य तदपेक्षया निवृत्तिः। स्वयमेवैकक्षणस्थायित्वेन स्वहेतोरूपपन्नत्वान्न मुद्गराद्यपेक्ष्यसौ निवर्त्तते। स्वयमेव निवृत्तत्वात्। अन्यथा तन्निवृत्त्ययोगात्। तस्मान्न भावाभावयोः कश्चित् संबन्धः। तदभावान्न तस्य प्रतिपत्तिः। न हि भाववदभावो देशाद्यनपेक्षः स्वतन्त्रः प्रत्ययविषयो यस्मात्तस्य प्रतिपत्तिः, न हि भाववदस्ति। कथञ्चिन्निमित्तमात्रम्। तत्र प्रमाणगोचरः। यच्च प्रतीयते देशाद्यपेक्षं तन्निरूप्यमाणं न तत्वतोऽस्तीति कथमभावः प्रमेयः स्यात्?। तद्भाव एवैकदास्ति। पश्चात्स एव न। न तु तस्यपश्चादभावः। इतश्च तस्य निरूप्यमाणं तत्वमस्ति। यतोऽसौ भवनधर्मा भवेदन्यथा वा?। पूर्वस्मिन् पक्षे वस्तुन्येवाभाव इति नाम कृतं स्यात्। उत्तरस्मिन्नपि सर्वपदार्थानामसत्त्वप्रसङ्गः। तस्याभ्युपगमेन तस्यानित्यताप्रभावादवश्यंभाविनी नित्यता। ततश्च विरोधिनः सर्वदा सन्निधानाद्भावो जगति मात्रेणाप्युच्छिद्येत। अपि च तस्यैकभावसंबन्धिता

न भवति । न च तथाऽभिवन्नभावेन विरोधमपेक्षते । तस्यान्य- विरोधिजन्यत्वात् । अथोच्यते । यथा मुद्गरापेक्षयासौ घटो न भवति, तथा संबन्धाभावापेक्षया न भविष्यतीति किमत्रा- नुपपन्नम्? । नन्वेतदेव, यत्तयोरसमानकालत्वम् । समानकालत्वे हि तयोर्विरोधाविरोधौ चिन्त्येते । नन्वेवमेवापि च मुद्गरा- दिवत्तस्य विरोधकत्वाभ्युपगमेऽनवस्थाप्रसक्तिः । यथा मुद्गरो घटस्याभावजनकत्वात्तद्विरोधी, एवमभावोऽप्यभावान्तरजनक- त्वेन । न च तदप्येवमित्यनवस्था । न वा किञ्चित्करादेरूत्पन्नस्य पदार्थान्तरस्य तथात्वव्यपदेशः । तन्न भावाभावयोर्विरोधोऽपि संबन्धः । किं च तस्य शास्त्रे कार्यकारणभावत्वेन स्थापितत्वा- न्मुद्गराद्यपेक्षा, तस्याऽसमर्थतरासमर्थतमेत्यादि । न तु तस्य तदपेक्षया निवृत्तिः । स्वयमेवैकक्षणस्थायित्वेन स्वहेतोरूपप- न्नत्वान्न मुद्गराद्यपेक्ष्यसौ निवर्त्तते । स्वयमेव निवृत्तत्वात् । अ- न्यथा तन्निवृत्त्ययोगात् । तस्मान्न भावाभावयोः कश्चित् संबन्धः। तदभावान्न तस्य प्रतिपत्तिः । न हि भाववदभावो देशाद्यनपेक्षः स्वतन्त्रः प्रत्ययविषयो यस्मात्तस्य प्रतिपत्तिः, न हि भाववदस्ति । कथञ्चिन्निमित्तमात्रम् । तन्न प्रमाणगोचरः । यच्च प्रतीयते देशा- द्यपेक्षं तन्निरूप्यमाणं न तत्वतोऽस्तीति कथमभावः प्रमेयः स्यात्? । तद्भाव एवैकदास्ति । पश्चात्स एव न । नतु तस्य पश्चा- दभावः । इतश्च तस्य निरूप्यमाणं तत्वमस्ति । यतोऽसौ भव- नधर्मा भवेदन्यथा वा? । पूर्वस्मिन् पक्षे वस्तुन्येवाभाव इति नाम कृतं स्यात् । उत्तरस्मिन्नपि सर्वपदार्थानामसत्वप्रसङ्गः । सत्वाभ्युपगमेन तस्यानित्यताद्यभावादवश्यंभाविनी नित्य- ता । ततश्च विरोधिनः सर्वदा सन्निधानाद्भावो जगति नाम- मात्रेणाप्युच्छिद्येत । अपि च तस्यैकभावसंबन्धि

नापि भावसंबन्धिता तस्य युक्ता । तयोर्भिन्नकालत्वात् । यदा घटाख्यो भावो न तदा तदभावः । यदा तु तस्यासत्त्वं तदा घटोऽस्तीति कथं तस्य तत्संबन्धिता ? । न च स्वतन्त्रस्य प्रतिपत्तिरत्रैवमुच्यते घटो नास्तीति तयोः समानाधिकरणप्रत्ययविषयता, तत्कथं नीलोत्पलादिवत्तयोः संबन्धाभावः अस्त्ययं प्रत्ययः, स तु संबन्धं विना सवन्मिथ्यात्वेन व्याख्यातृभिर्व्यवस्थापितः । यतो न प्रतिभासनिबन्धनं सत्त्वम् । तन्निबन्धनत्वे तस्य नेदानीं किञ्चिद्भवेत् । प्रतिभासस्यासत्त्वेऽपि सत्त्ववदुपजायमानत्वात् । तस्माद् घटस्याभाव इति प्रत्ययो मिथ्या । विशेषणविशेष्यभावश्च संबन्धस्तयोरस्तीति न तस्य संबन्धपूर्वकत्वेन स्थितत्वात् कथमत्र तद्भावः? । अन्यथा पुरुषेच्छायत्तयोर्विपर्ययो न स्यात् । दृश्यते च तदिच्छया विपर्ययः । कदाचिद्विशेषणत्वेऽपि व्यवस्थितं पूर्वं पश्चाद्विशेष्यत्वेन विवक्षत्येवं विशेष्येऽपि द्रष्टव्यम् । उभयोरुभयरूपत्वाददोष इति चेत् । तदनन्तरयोरसंबन्धप्रसङ्गात् । न विशेष्यस्य विशेषणेन संबन्धो, नापि विशेषणस्य तथाविधः । नापि चोभयोर्द्विरूपत्वे, सर्वदा तयोर्द्विरूपा प्रतिपत्तिर्भवेत् । न चैतद्दृष्टम् । तस्मान्न घटस्याभाव इति तयोर्विशेषणविशेष्यभावो मा भूत् । असौ विरोधस्तु तयोरस्तीत्येवमभिधानमेतदसत् । तस्मिन् सति सबन्धित्वेन प्रतिभासो न स्यादपि तु विरुद्धत्वेन । मुद्गरादिवत् विरोधोऽप्यवस्थाप्यमान एवं व्यवतिष्ठते । यद्भावे सति भावो न स्यात् । प्रकाश इव तमः । न त्वेवमत्रास्ति । न हि घटे विद्यमाने कुतश्चित् स्वस्मान्निमित्तादभावो भवन् भावं विरुणद्धि । प्रकाशवदेव । किं तु स्वस्मान्मुद्गरादेर्विरोधिनः प्रत्ययात् स्वयमेव

न भवति । न च तथाऽभिवन्नभावेन विरोधमपेक्षते । तस्यान्य विरोधिजन्यत्वात् । अथोच्यते । यथा मुद्गरापेक्षयाऽसौ घटो न भवति, तथा संबन्धाभावापेक्षया न भविष्यतीति किमत्रानुपपन्नम्? । नन्वेतदेव, यत्तयोरसमानकालत्वम् । समानकालत्वे हि तयोर्विरोधाविरोधौ चिन्त्येते । नन्वेवमेवापि च मुद्गरादिवत्तस्य विरोधकत्वाभ्युपगमेऽनवस्थाप्रसक्तिः । यथा मुद्गरो घटस्याभावजनकत्वात्तद्विरोधी, एवमभावोऽप्यभावान्तरजनकत्वेन । न च तदप्येवमित्यनवस्था । न वा किञ्चित्करादेरूत्पन्नस्य पदार्थान्तरस्य तथात्वव्यपदेशः । तन्न भावाभावयोर्विरोधोऽपि संबन्धः । किं च तस्य शास्त्रे कार्यकारणभावत्वेन स्थापितत्वान्मुद्गराद्यपेक्षा, तस्याऽसमर्थतरासमर्थतमेत्यादि । न तु तस्य तदपेक्षया निवृत्तिः । स्वयमेवैकक्षणस्थायित्वेन स्वहेतोरूत्पन्नत्वान्न मुद्गराद्यपेक्ष्यसौ निवर्त्तते । स्वयमेव निवृत्तत्वात् । अन्यथा तन्निवृत्त्ययोगात् । तस्मान्न भावाभावयोः कश्चित् संबन्धः । तदभावान्न तस्य प्रतिपत्तिः । न हि भाववदभावो देशाद्यनपेक्षः स्वतन्त्रः प्रत्ययविषयो यस्मात्तस्य प्रतिपत्तिः, न हि भाववदस्ति । कथञ्चिन्निमित्तमात्रम् । तन्न प्रमाणगोचरः । यच्च प्रतीयते देशाद्यपेक्षं तन्निरूप्यमाणं न तत्वतोऽस्तीति कथमभावः प्रमेयः स्यात्? । तद्भाव एवैकदास्ति । पश्चात्स एव न । न तु तस्य पश्चादभावः । इतश्च तस्य निरूप्यमाणं तत्वमस्ति । यतोऽसौ भवनधर्मा भवेदन्यथा वा? । पूर्वस्मिन् पक्षे वस्तुन्येवाभाव इति नाम कृतं स्यात् । उत्तरस्मिन्नपि सर्वपदार्थानामसत्त्वप्रसङ्गः । सत्त्वाभ्युपगमेन तस्यानित्यताप्रभावादवश्यंभाविनी नित्यता । ततश्च विरोधिनः सर्वदा सन्निधानाद्भावो जगति नाममात्रेणाप्युच्छिद्येत । अपि च तस्यैकभावसंबन्धिता स्यात्

न भवति । न च तथाऽभिवन्नभावेन विरोधमपेक्षते । तस्यान्य विरोधिजन्यत्वात् । अथोच्यते । यथा मुद्गरापेक्षयासौ घटो न भवति, तथा संबन्धाभावापेक्षया न भविष्यतीति किमत्रानुपपन्नम्? । नन्वेतदेव, यत्तयोरसमानकालत्वम् । समानकालत्वे हि तयोर्विरोधाविरोधौ चिन्त्येते । नन्वेवमेवापि च मुद्गरादिवत्तस्य विरोधकत्वाभ्युपगमेऽनवस्थाप्रसक्तिः । यथा मुद्गरो घटस्याभावजनकत्वात्तद्विरोधी, एवमभावोऽप्यभावान्तरजनकत्वेन । न च तदप्येवमित्यनवस्था । न वा किञ्चित्करादेरूत्पन्नस्य पदार्थान्तरस्य तथात्वव्यपदेशः । तत्र भावाभावयोर्विरोधोऽपि संबन्धः । किं च तस्य शास्त्रे कार्यकारणभावत्वेन स्थापितत्वान्मुद्गराद्यपेक्षा, तस्याऽसमर्थतरासमर्थतमेत्यादि । न तु तस्य तदपेक्षया निवृत्तिः । स्वयमेवैकक्षणस्थायित्वेन स्वहेतोरूपपन्नत्वान्न मुद्गराद्यपेक्ष्यसौ निवर्त्तते । स्वयमेव निवृत्तत्वात् । अन्यथा तन्निवृत्त्ययोगात् । तस्मान्न भावाभावयोः कश्चित् संबन्धः । तदभावान्न तस्य प्रतिपत्तिः । न हि भाववदभावो देशाद्यनपेक्षः स्वतन्त्रः प्रत्ययविषयो यस्मात्तस्य प्रतिपत्तिः, न हि भाववदस्ति । कथञ्चिन्निमित्तमात्रम् । तन्न प्रमाणगोचरः । यच्च प्रतीयते देशाद्यपेक्षं तन्निरूप्यमाणं न तत्वतोऽस्तीति कथमभावः प्रमेयः स्यात्? । तद्भाव एवैकदास्ति । पश्चात्स एव न । न तु तस्य पश्चादभावः । इतश्च तस्य निरूप्यमाणं तत्वमस्ति । यतोऽसौ भवनधर्मा भवेदन्यथा वा? । पूर्वस्मिन् पक्षे वस्तुन्येवाभाव इति नाम कृतं स्यात् । उत्तरस्मिन्नपि सर्वपदार्थानामसत्त्वप्रसङ्गः । सत्त्वाभ्युपगमेन तस्यानित्यताद्यभावादवश्यंभाविनी नित्यता । ततश्च विरोधिनः सर्वदा सन्निपानाद्भावो जगति नाममात्रेणाप्युच्छिद्येत । अपि च तस्यैकभावसंबन्धिता भवेत्

सर्वसंबन्धिता वा?। पूर्वस्मिन् पक्षे विशेषो वक्तव्यो येन तस्
यासौ नान्यस्येति । तन्निवृत्तिस्वभावत्वादेवं भविष्यत
त्यपास्तम्। अकिञ्चित्करत्वेन तस्याः। यथा ह्युत्पन्ने तत्राकिं
त्कार्यपि तस्य निवृत्तिस्तथा त्रैलोक्यस्यापि किमिति न भवि
तस्मादेकभावसंबन्धिनामपि सर्वसंबन्धिता। एकस्य विनाशोत्प
वा सर्वस्य विनाशोत्पादप्रसङ्गात्। न चैवमस्ति। तन्नाभा
स्य केनचित् संबन्धः। तस्मात् कल्पनामात्रदर्शित एवाभावो
तत्वतः कश्चिदस्तीति स्थितम्। अत्राहुः। एवमभावनिराकर
पर्युदासस्यैको न कर्थः स्यात् तत्र च द्वयी गतिः। वस्त्वन्तर
सत्ताऽन्यस्याभावः। पदार्थान्तरत्वेन वा भावविलक्षणस्याभ्यु
गतस्योत्तरस्मिन् पक्षे प्रसज्यप्रतिषेधे यो दोष उक्तः, सोऽत्राप्य
परिहार्यः। न हि पदार्थान्तरोत्पत्तौ स्वरूपेणाप्रच्युतस्य भाव
पूर्ववदुपलब्ध्याद्यकरणम्। निवृत्तौ वा स्वयमेव तस्य निवृत्तेः
पदार्थान्तरोत्पत्त्या किञ्चित्ततोऽन्यतरः पक्षः। नापि पूर्वत्र
एव भावोऽन्यापेक्षयाऽभावस्ततश्च घटस्य प्रध्वंसः कपा
लसत्ता। यदा च कुतश्चिन्निमित्तात्तेषां प्रध्वंसस्तदा गत्य
न्तराभावाद्घटस्याभावे प्रतिषिद्धे सत्तया भाव्यम्। न चैतद्दृष्टम्
किं च यथा कपालानां सत्ता घटस्याकिञ्चित्कार्यः प्रध्वंस
स्तथा त्रैलोक्यस्यापि वा प्रसज्येत। ततश्चैकविनाशे सर्ववि-
, एकोत्पादे च सर्वोत्पादः। तथा हि दध्नः प्रागभावः क्षीर-
। तन्निवृत्त्या तस्योत्पादात्। यथा च प्रागभावव्यावृत्तौ
पत्तिरेवं पदार्थान्तरस्यापि। तस्यैवासौ प्रागभावः प्रध्वंसो
। तेन न पूर्वोक्तो दोषः। । तेन सह
चहेतुभावः तत्प्रसज्यप्रतिषेधे
पस्याभावात् कथं तत्प्रा

श्यते । तत्रैवमभावे ग्रन्थकारैः पदार्थसंकाराख्यो ोषः प्रतिपादितः । क्षीरे दधिभवेदेवमित्यादिना । परात्मनो-सत्त्वाभ्युपगमे पूर्वोक्तमसामञ्जस्यं प्रतिपादितम् । अथ ब्रूयात् यादयं दोषः । यदि स एव भावः पररूपेणासन्न भवेत् किं तु पर-ूपेणासत्त्वं धर्मिणो धर्मस्तदा च द्व्यात्मकः पदार्थोऽभ्युपगतो ावति । तदुक्तम् ।

स्वरूपपररूपाभ्यां नित्यं सदसदात्मके ।
वस्तुनि ज्ञायते किञ्चिद्रूपं कैश्चित् कदाचन ॥

न च तयोर्भावाभावलक्षणयोरंशयोरनेन प्रकारेणाभेद ुक्तः । येनायं दोषः स्यात् । किंतु कथं चिद्भेदस्याभ्युपगमा-ुक्तम् ।

धर्मयोर्भेद इष्टो हि धर्मभेदेऽपि नः स्थिते ।

अथोक्तम् । एकान्तिको भेदस्तु तयोः कथञ्चिद्भा-ेदस्तावदिष्टः । तथा सति भावस्य घटाख्यस्याभावां-ोऽपि तेन पदार्थान्तरात्पटाख्या यथाऽसंकीर्णता, एवं ावाश्रयैरपि । ततश्च पटादिभावांशादपि तेनासंकीर्णता-ावान्तरेण भाव्यम् । तस्मादप्यसंकीर्णत्वाभ्युपगमेऽनवस्था रदर्शितैव । तत्राभावांशाभ्युपगमेनापि पदार्थान्तरत्वात् पदा-र्थान्तरस्य व्यावृत्तेर्वस्त्वसंकरसिद्धिः । किं तु स्वहेतुतः समुप-जायमाना भावाः परस्परासंकीर्णस्वभावा एवोपजायन्ते । अन्य था पूर्वोक्तदोषप्रसङ्गः । तदुक्तम् । सर्वे भावाः स्वस्वभावस्थितयो नात्मानं परेण मिश्रयन्ति । तत्रास्तीति व्यवहारमात्रम् । न त्व-भावो नाम तज्ज्ञानगम्यः कश्चिद्विद्यते । भाव एवैकदाऽस्त्यन्यदा न एव न, न तु तस्याभावः । यतो भावैकपरनामा भावाः । स्वरूपे, पररूपेण तु न सन्तो नाप्यसतः । तथाभ्युपगमे पूर्वोक्तदोषः

सर्वसंबन्धिता वा?। पूर्वस्मिन् पक्षे विशेषो वक्तव्यो येन तस्यैवासौ नान्यस्येति । तन्निवृत्तिस्वभावत्वादेवं भविष्यतीत्यपास्तम्। अकिञ्चित्करत्वेन तस्याः । यथा ह्यसौ तत्राकिञ्चित्कार्यपि तस्य निवृत्तिस्तथा त्रैलोक्यस्यापि किमिति न भवति तस्मैकभावसंबन्धिनामपि सर्वसंबन्धिता । एकस्य विनाशोत्पादे वा सर्वस्य विनाशोत्पादप्रसङ्गात्। न चैवमस्ति । तन्नाभावस्य केनचित् संबन्धः । तस्मात् कल्पनामात्रदर्शित एवाभावो न तत्त्वतः कश्चिदस्तीति स्थितम्। अत्राहुः । एवमभावनिराकरणे पर्युदासस्यैको न अर्थः स्यात् तत्र च द्वयी गतिः । वस्त्वन्तरस्य सत्ताऽन्यस्याभावः । पदार्थान्तरत्वेन वा भावविलक्षणस्याभ्युपगतस्योत्तरस्मिन् पक्षे प्रसज्यप्रतिषेधे यो दोष उक्तः, सोऽत्राप्यपरिहार्यः। न हि पदार्थान्तरोत्पत्तौ स्वरूपेणाप्रच्युतस्य भावस्य पूर्ववदुपलब्ध्याद्यकरणम् । निवृत्तौ वा स्वयमेव तस्य निवृत्तेर्वा पदार्थान्तरोत्पत्त्या किञ्चित्तोऽन्यतरः पक्षः । नापि पूर्वत्र स एव भावोऽन्यापेक्षयाऽभावस्ततश्च घटस्य प्रध्वंसः कपालसत्ता । यदा च कुतश्चिन्निमित्तात्तेषां प्रध्वंसस्तदा गत्यन्तराभावाद्घटस्याभावे प्रतिषिद्धे सत्तया भाव्यम्। न चैतद्दृष्टम् । किं च :यथा कपालानां सत्ता घटस्याकिञ्चित्कार्यः प्रध्वंसस्तथा त्रैलोक्यस्यापि वा प्रसज्येत । ततश्चैकविनाशे सर्वविनाशः, एकोत्पादे च सर्वोत्पादः । तथा हि दध्नः प्रागभावः क्षीरमात्रम् । तन्निवृत्त्या तस्योत्पादात्। यथा च प्रागभावव्यावृत्तौ दध्न उत्पत्तिरेवं पदार्थान्तरस्यापि। तस्यैवासौ प्रागभावः प्रध्वंसो वा । तेन न पूर्वोक्तो दोषः । अत्रोक्तम्। तेन सह संबन्धे विशेषहेतुभावः तत्प्रसज्यप्रतिषेधे पर्युदासरूपस्याभावाख्यस्य प्रमेयस्याभावात् कथं तत्प्रतिपत्तिः । कुतश्चिल्लिङ्गाद्

वृत्तिः। तस्मिन्नतमनुपलब्धेः सविशेषणाया अभावव्यवहारयोग्यतां प्रति लिङ्गता। नन्वनुपलब्धेः किं विशेषणं, येनेदमुच्यते। किमत्र प्रष्टव्यम्। निषिध्यमानस्य दृश्यत्वम्?। तत्र। तदानीमयं न दृश्यते कथं तथा व्यपदिश्यते?। अदृश्यमानोऽपि दर्शनयोग्यश्चेत्। तद्योग्यत्वं दर्शनाभावात् कथमवगमात्रोक्तं व्याख्यातुमिन्द्रियत्वं समारोपितं तत्र न तु वास्तवम्। अतः समारोपितदृश्यत्वाभिप्रायेणानुपलब्धेः पूर्वोक्तं विशेषणम्। एतच्च पूर्वावगतस्य घटस्य शशविषाणस्य वाऽनवगतस्य द्वयोरपि तुल्यम्। क्वचित्प्रतिषेधे तत्स्थितं यथोक्तं विशेषणतयाऽनुपलब्धेर्व्यवहारयोग्यतास्वभावः प्रमेयम्। ननु भावव्यतिरिक्तोऽभावः।

अत्राहुः। सर्वज्ञस्य ज्ञानद्वयं समुपजायत इदमस्ति इदं नास्तीति। तयोश्च विभिन्नविषययोराभासित्याद्वैलक्षण्यं प्रसिद्धम्। एकस्य भावविषयत्वादपरस्याभावविषयत्वात्। तत्रैतत्स्यात्। द्वयोर्मध्ये कतरद्भावप्रतिभास्यन्यदभावस्य। न तु स्फुटे प्रतिभासे चेत् कुतस्त्यः संशयो वाहुः प्रतिभासोत्पादादेव। भावो हि सामर्थ्यलक्षणः शास्त्रे गीयते, तद्विलक्षणो। न चाभावेन भवितव्यम्। अन्यथा तयोर्न स्यात् स्वरूपाभेदाद् वैलक्षण्यम्। तस्मात्तस्यासमर्थत्वेनैव भवितव्यम्। असामर्थ्याच्च कुतः प्रतिभासः?। सामर्थ्ये चाभावस्यैवाभाव इति नामकरणम्। न च तन्निबन्धनमर्थतथात्वम्। तद्भाव एव वस्त्वन्तरासंसृष्टतयोपलभ्यमानः पूर्वोक्तज्ञानद्वयं जनयति। अत इदमभावज्ञानं भावग्राहिप्रमाणसामर्थ्यादुत्पन्नं न प्रमाणान्तरम्। अत्रोच्यते। भावसामर्थ्यादस्योत्पादेऽस्तीत्येवमुत्पत्तिः स्यान्न तु नास्तीति। जनकस्य भावैकस्वभावत्वात्। यथानुभवं च विकल्पेनोत्पत्तव्यं न त्वन्यथा विकल्पः। तत्रैतद्भवेत्। अन्यापेक्षया जनकस्य प्रतिषेधरूपताऽप्य-

स्तीत्यतोऽयमदोषः । नैतच्चारु। तस्योभयरूपत्वे पूर्वोक्तदोषानुवृत्तेः। एतच्च भवद्भिरेवोपगतम्। स्वरूपेण तु न सन्नसन्निति वदद्भिस्तद्विविधस्वभावत्वादस्तीति विकल्पं जनयेत्, न प्रतिषेधविकल्पम्। अतद्रूपत्वात् । अस्ति च प्रतिषेधविकल्पो भवतां मते स्वसंवेदनप्रत्यक्षसिद्धः । स च विषयभेदात् प्रमाणान्तरम् । ननु प्रतिषेधविकल्पस्याभावविषयत्वं तस्याऽजनकत्वेन प्रतिक्षिप्तम् ।

अत्र केचिदाहुः । भावेऽयं नियमो जनकस्य प्रतिभासोऽभावस्त्वजनकोऽपि स्फुटप्रतिभासोत्पत्तेः प्रतिभासत इति कमुपालभेमहि। न च प्रतिभासापलापो युक्तः। अपि च भावेऽप्ययं न नियमः । जनकस्यैव भावस्य प्रतिभासो यः प्रतिभासे प्रतिभाति ग्राह्याकारो वर्त्तमानावछिन्नः, तस्य प्रतिभासमानकालत्वेन अजनकत्वं यस्य जनकता तस्यातीतत्वात्। तन्न प्रतिभासः। तत्रैतद्भवेत्। जनकस्य न साक्षात्प्रतिभासः किं तु स्वाकारजननमेव तस्य ग्राहकत्वं न तु प्रतिभासमानकालत्वेन तदभावस्य सामर्थ्यं तथाविधं ग्राहकत्वेन संभवति ।

अत्र वदन्ति। कथमसौ प्रतिभाससमानकाल आकारोऽनुपकारकस्तत्र प्रतिभाति । न चान्यस्योपकारकत्वेऽन्यप्रतिभासः । अतिप्रसङ्गात् । एकसामग्र्यधीनत्वेनातिप्रसङ्गनिवारणं प्रतिक्षिप्तम् । किञ्चोपकार्याभावाज्जनकस्य भावस्य ग्राह्यत्वेन परिकल्पितस्योपकारकत्वमनुपपन्नम् । न च ज्ञानप्रतिभास्याकार उपकार्यः । तस्य स तत्वतोऽसत्वेनाभ्युपगमात् । अतः कथंभावस्योपकारकत्वम् ? । मा भूत् ज्ञानाकारस्योपकार्यता । ज्ञानं तु परमार्थं सद्विद्यते तदपेक्षयोपकारकत्वं भविष्यति । एतदपि अज्ञानप्रतिभासिन आकारस्याऽपरमार्थसत्वे तदव्यतिरेकज्ञानस्याप्यसत्वप्रसङ्गात्तस्य योपक-

पता । कः पुनस्तद्रूपता, यो दोषः? । न कश्चित्तदसत्त्वव्यतिरेकेण । यथा हि ग्राह्काकारे वृत्तिविकल्पादिर्बाधकं प्रमाणं प्रवृत्तमसत्त्वं प्रतिपादयति । तथा तद्व्यतिरिक्तस्यापि बोधाकारस्यासत्त्वमावेदयेत् तदकार्यकारणभूत एव ग्राह्यत्वेनाभिमतो भावः प्रतिभाति, तद्वदभावोऽपि । नन्वेवमजनकस्याभावस्य प्रतिभास्यत्वे सर्वदाऽभावप्रतीतिः स्यात् । स्यादयं दोषो यदि तद्ग्रहकप्रमाणोपपत्तौ निमित्तं सर्वदा स्यात् । किं पुनस्तद्यत्सर्वदा न भवति? । प्रतिषिध्यमानपदार्थस्मरणं भावोपलम्भश्च । अतः प्रमाणोपपत्तिनिमित्तान्वयव्यतिरेकानुविधानात् कादाचित्कत्वमभावग्राहिणो न त्वभावस्य । जनकत्वात्तस्य सदैव भावात् । तत्प्रमाणान्तरमभावः । एवं केचिदाहुः । अन्ये ब्रुवते । अभावस्य प्रतिभासजनकत्वं किमक्षणिकत्वान्नेष्यते, आहोस्वित् प्रतिभासजनकत्वेन भावाद्वैलक्षण्यं न स्यादित्युच्यते? । यदि पूर्वः पक्षस्तदेतत् प्रतिभासमाधास्यते । क्षणभङ्गभङ्गे यथा भावस्याकिञ्चित्करस्य सहकार्यपेक्षस्य कार्यजनकत्वं, तथाऽभावस्यापीति वक्ष्यते । अथ द्वितीयः । सोऽपि न युक्तः । न हि अन्यत्वजनकत्वाद्वैलक्षण्यानुपपत्तिः । एवं ह्यवैलक्षण्ये जगति न किंचित्कुतश्चिद्विलक्षणं भवेत् । पूर्वोक्तस्य निमित्तद्वयस्य सम्भवात् । अथ तस्मिन् सत्यपि हेतुभेदात्प्रतिभासते, भेदाच्च भावानां विलक्षणता तद्वदभावेऽपि स्यात् । अथोच्यते । सर्वसामर्थ्योपाख्याविरहलक्षणमसत्त्वं तदेव चाभावोऽतः कथं तस्य जनकत्वम्? । न सामर्थ्यलक्षणं सत्त्वम् । तस्य क्षणभङ्गभङ्गे निषेत्स्यमानत्वात् । तदभावस्य प्रतिभासाजनकत्वादप्रमेयत्वमयुक्तम् । अथ न पूर्वोक्तेन निमित्तेन तस्याप्रमेयता, किं तु भावाव्यतिरिक्तस्य तस्यासंभवात् । एवमुच्यते । एतदसद्रूपात्

षस्य कथं भेदः ? । किमत्र प्रष्टव्यम् ? । भिन्नप्रत्ययविषयत्वात्तस्य । तस्माद्भेदेऽत्राप्यस्तीति प्रत्ययप्रतिभासः स्यात् । तदसत् । तस्मिन् वाऽसति कथं विलक्षणः प्रत्ययस्तत्रैतस्यान्न प्रतिभास्यभेदान्नास्तीति प्रत्ययस्य पूर्वस्माद्वैलक्षण्यं किंतु सामग्रीभेदात् । नन्वेकोपलम्भानुभवाध्यवसाययोरुत्पादे कथं सामग्रीभेदः । नैष दोषः । प्रतिषिध्यमानस्मरणस्य नास्तीति प्रत्यये पूर्वस्मादाधिक्यान्न तु तस्यैव कथमुत्पत्तिः । न ह्यप्रतिबद्धपदार्थदर्शनेऽन्यस्य स्मरणम् । अतिप्रसङ्गादेकज्ञानसंसर्गः प्रतिबन्ध इति चेत् । वक्तव्यं तर्हि कोऽयमेकज्ञानसंसर्गः । पूर्वं द्वयोः सह प्रतिभास्यतेति चेत् तर्हि तयोर्यत्र न दृष्टस्तस्य तत्रादृश्यमानस्य प्रतिषेधो न स्यात् । प्रतिषिध्यमानस्मरणनिमित्ताभावाद्योग्यतेति चेत् । साऽपि न युक्ता । दर्शनं विना कार्यानुनेयत्वात्तस्याः । यदि ब्रूयान्न योग्यता पूर्वोक्ताऽस्माभिर्भण्यते किंतु यदि प्रतिषिध्यमानं वस्तु तत्र संनिहितं भवेत्, तदा भूतलमिव द्रष्टुं शक्यं स्यात् । इयं योग्यतैकज्ञानसंसर्गलक्षणा । अस्यामपि योग्यतायां नैकस्यैव प्रतिभासो भवेत् किं तु यावत्तत्र सन्निहितं द्रष्टुं शक्यं तस्य स्मरणे सति प्रतिषेधप्रतिभासः स्यात् । न चैतदस्ति । कस्यचिदेव प्रतिभासात् । तन्न प्रतिषेधविकल्पोत्पत्तौ प्रतिषिध्यमानस्मरणं पूर्वस्मात्सामग्र्यन्तरम् । तन्नास्तीति विकल्पो न भवेत् । एकनिमित्तोत्पन्नयोर्वैलक्षण्याभावात् । भवतु वा तदुत्पत्तौ सामग्र्यन्तरं तथापि नोपायभेदात् विकल्पयोर्भेदः, किं तु प्रतिभासस्य भेदात् । प्रत्यक्षानुमानयोरिव । तदुक्तम् ।

प्रामाण्यं वस्तुविषयं द्वयोरर्थभिदां जगौ ।
प्रतिभासस्य भिन्नत्वादेकस्मिंस्तदयोगतः ॥ १ ॥

युक्तं चैतत् । अन्यथा नास्तीतिप्रत्ययेऽप्रतिपत्तिरेव

स्यात् । ततः प्रतिभास्यं तावदसत्वान्न प्रतिभासोऽपि वक्ष्यमाणात् स्वसंवेदननिषेधान्नैव । न च वस्त्वन्तरमस्ति । अतो नास्तीति विकल्पोत्पादानुत्पादयोः प्रतिभासाभावात्तुल्यता प्रसक्ता । अथ भेदानुमानस्य प्रतिभासस्य संभवात्प्रत्यक्षानुमानयोर्विषयभेदाद्भेदोऽस्ति । प्रमाणत्वात् नास्तीति विकल्पस्य पुनर्न प्रतिभासोऽस्ति । नापि प्रमाणत्वम्।अतस्तत्तुल्यता तस्य न युक्ता। नन्वनुमानेऽपि नैव प्रतिभास्यं वस्त्वस्ति। आरोपितस्य तद्विषयत्वेनाभ्युपगमात् । तच्च नास्तीति विकल्पेऽपि न दण्डवारितम्। यथा युक्तिबाधितत्वेऽपि तद्विषयस्याभ्युपगमस्तथा नास्तीति विकल्पविषयस्यापि तत्प्रामाण्यमप्यस्तीति विकल्पवन्नास्तीति विकल्पस्य प्रापकत्वान्न वार्यते। ननु न विधिविकल्पस्य तत्र प्रामाण्यं किन्तु दर्शनमेव स्वाकारार्पणात्तद्रूपतामापन्नं वस्तु प्रापयत् प्रमाणम् ।प्रतिषेधविकल्पेऽपि दर्शनस्यैवंरूपता किमिति न कथ्यते?। अथ विधिविकल्पस्य पारम्पर्येण विषयो नीलादिः स प्राप्यते । प्रतिषेधविकल्पस्य तु यो विषयस्तस्य न कथञ्चित्प्राप्तिरिति तदाकारतामापन्नं दर्शनेन तत्र प्रमाणं, कथं न प्राप्तिर्यतो नीलं प्राप्यमाणं तत्प्रत्येत्याविनाभूतपीताद्यसंसृष्टम्। प्राप्यं तु न शुद्धम् । तस्याश्च पदार्थव्यवस्यानिबन्धनायाः प्रच्युतेः कथञ्चित्प्राप्तिरस्तीति कथं न तत्र दर्शनं प्रमाणम् ?। तदनभ्युपगमे च पदार्थव्यवस्था नास्तीत्युक्तैर्लाक्षणिकविरोधं प्रदर्शयद्भिः । कल्पितायास्तस्याः सर्वाभ्युपगमाददोष इति वेदे तन्नातिप्रभाषितनमकाल्पनिकवस्तुव्यवस्थापकत्वं कल्पितत्वं च ॥ अथोच्येत । तस्याः प्रापकत्वेऽपि कथञ्चिद्दर्शकं न प्रमाणम्। तदर्थक्रियाकरणात् । ननु केयमर्थक्रिया ?। यामसौ न करोति। नीलादिसाध्यमिति चेत्। तन्न नीला-

द्व्यपितुल्यम्। तेऽपि न परस्यार्थक्रियां कुर्वन्ति। अथ वस्त्वतरसाध्यार्थक्रियाकरणेऽपि स्वकार्यकर्तृत्वं तेषामस्तीत्युच्यते तत्प्रच्युतेरपि न केनचिद्वारितम्। तथाहि-पीताद्यवच्छेदकत्वं प्रच्युतेर्भवद्भिरभ्युपगतं, तदनुमानवद्दर्शनपृष्ठभाविविधिविकल्पवच्च प्रतिषेधविकल्पस्यापि प्रामाण्यम्। तन्नानुपलब्धेर्लिङ्गादसद्व्यवहारयोग्यताऽनुमीयते। किंत्वभाव एव तत्र प्रमाणान्तरगम्यो न तु सदुपलम्भप्रमाणगम्यः। पूर्वोक्तेन न्यायेनेतश्चैतन्न। यतः कश्चित् कुतश्चिदागतः पृच्छयते। तत्र प्रदेशे चैत्रः स्थितो न वेति। स प्रश्नो चैत्र स्मृत्वा तदभावमवगत्य वक्ति न तत्र स्थितः न च तत्र सदभावावगमे तस्य तदानीमिन्द्रियव्यापरः। नापि लिङ्गं किञ्चिद्विद्यते। न चानुपपद्यमानः। नाप्यागम, उपमानं वा। न च तदप्रतिपत्तिर्नाऽस्ति। प्रश्नस्योत्तरदानात्। नापीयं स्मृतिः। पूर्वं तदभावानवगमात्। प्रतिषिध्यमानपदार्थस्मरणं तदभावावगमे निमित्तम्। तच्च निमित्ताभावात् पूर्वं तस्य नोत्पन्नं इदानीं प्रश्ने सति सञ्जातम्। अथोत्पत्तेः पूर्वमेव तत्रोपलब्धिलक्षणप्राप्तावशेषवस्तुस्वभावग्रहणम्। मेचकबुद्ध्या तस्मिन् सति यस्य स्मरणादि सहकारिकारणमस्ति तस्य तस्य व्यक्तितिरस्कृतस्वग्रहीत् तस्य स्फुटप्रतिभासविशेष्यता। एत दसाधु। यतोऽस्य ग्रहणं भवद्विकल्पद्वयं नातिवर्त्तते। स्वतन्त्रस्याशेषवस्तुस्वभावस्य ग्रहणमन्योपसर्ज्जनस्य वा प्राप्ते विकल्पेनैकाभावस्मरणं भवेत्। सर्वेषां सह गृहीतत्वात्। तेनान्योपसर्जनत्वेन ग्रहणं व्याख्यातम्। तत्स्मृतिरपि न भवति। न च सदुपलम्भकं तदवगमे किञ्चित्प्रमाणमस्ति। परिशेषादभावाख्यात् प्रमाणात्तस्यावगमः। तदुक्तम्।

स्वरूपमात्रं दृष्टं च पश्चात्कश्चित्स्मरन्नपि।
तत्रान्यो नास्तितां पृष्टस्तदैव प्रतिपद्यते॥

स्यात् । ततः प्रतिभास्यं तावदसत्वान्न प्रतिभासोऽपि वक्ष्यमाणात् स्वसंवेदननिषेधान्नैव । न च वस्त्वन्तरमस्ति । अतो नास्तीति विकल्पोत्पादानुत्पादयोः प्रतिभासाभावात्तुल्यता प्रसक्ता । अथ भेदानुमानस्य प्रतिभासस्य संभवात्प्रत्यक्षानुमानयोर्विषयभेदाद्भेदोऽस्ति । प्रमाणत्वात् नास्तीति विकल्पस्य पुनर्न प्रतिभासोऽस्ति । नापि प्रमाणत्वम् । अतस्तत्तुल्यता तस्य न युक्ता । नन्वनुमानेऽपि नैव प्रतिभास्यं वस्त्वस्ति । आरोपितस्य तद्विषयत्वे नाभ्युपगमात् । तच्च नास्तीति विकल्पेऽपि न दण्डवारितम् । यथा युक्तिबाधितत्वेऽपि तद्विषयस्याभ्युपगमस्तथा नास्तीति विकल्पविषयस्यापि तत्प्रामाण्यमप्यस्तीति विकल्पवन्नास्तीति विकल्पस्य प्रापकत्वान्न वार्यते । ननु न विधिविकल्पस्य तत्र प्रामाण्यं किन्तु दर्शनमेव स्वाकारार्पणात्तद्रूपतामापन्नं वस्तु प्रापयत् प्रमाणम् । प्रतिषेधविकल्पेऽपि दर्शनस्यैवंरूपता किमिति न कथ्यते? । अथ विधिविकल्पस्य पारम्पर्येण विषयो नीलादिः स प्राप्यते । प्रतिषेधविकल्पस्य तु यो विषयस्तस्य न कथञ्चित्प्राप्तिरिति तदाकारतामापन्नं दर्शनेन तत्र प्रमाणं, कथं न प्राप्तिर्यतो नीलं प्राप्यमाणं तत्प्रत्येत्याविनाभूतपीताद्यसंसृष्टम् । प्राप्यं तु न शुद्धम् । तस्याश्च पदार्थव्यवस्थानिबन्धनायाः प्रच्युतेः कथञ्चित्प्राप्तिरस्तीति कथं न तत्र दर्शनं प्रमाणम् ? । तदनभ्युपगमे च पदार्थव्यवस्था नास्तीत्युक्तैर्लाक्षणिकविरोधं प्रदर्शयद्भिः । कल्पितायास्तस्याः सर्वाभ्युपगमाददोष इति वेदे तन्नातिसुभाषितनमकाल्पनिकवस्तुव्यवस्थापकत्वं कल्पितत्वं च ॥ अथोच्येत । तस्याः प्रापकत्वेऽपि कथञ्चिद्दर्शकं न प्रमाणम् । तदर्थक्रियाकरणात् । ननु केयमर्थक्रिया ? । यामसौ न करोति । नीलादिसाध्यमिति चेत् । तन्न नीला-

मानसं नास्तिताज्ञानं जायते ऽक्षानपेक्षणादिति ॥

तदयुक्तम् । दुरादग्नौ स्पर्शज्ञानं सहचररूपोपलम्भादानुमानिकमिह भूतलस्य तत्प्रतिपत्तेश्च लिङ्गत्वानिश्चयान्न संन्यासः । यथा च भवतां भूतलेऽनुपलभ्यमानेऽस्तीति ज्ञानस्य । ततः परं पुनर्वस्तुधर्मैर्जात्यादिभिर्यया बुद्ध्याऽवसीयते सापि प्रत्यक्षत्वेन समतेत्यभिधानादप्रत्यक्षता ? तथा नास्तीति ज्ञानस्यापि । किञ्च भावांशस्य ग्रहणं किं वस्त्वन्तरसंसृष्टस्य किं वासंसृष्टस्य ? । यदि संसृष्टस्य तदा प्रत्यक्षबाधितत्वादभावः प्रमाणं न स्यात् । अथासंसृष्टस्य तदा कथं भावस्य प्रत्यक्षता । अथ वस्तुमात्रमेव प्रतीयते न वस्त्वन्तराभावः । तत्किं वस्त्वन्तर तत्र प्रतिभाति ? । नेति चेत् । तत् कथं न तदभावः प्रत्यक्षग्राह्यः । अथ प्रत्यक्षेण न तद्भावो नाप्यभावः प्रतीयते । तद्वत् । एवं ह्यप्रवृत्तिनिवृत्तिकं जगत् स्यात् । तदुक्तम् । न ह्ययमनलं पश्यन्नप्यनलमेव पश्यति । किं तु सलिलमपि । ततस्तदर्थी न तिष्ठेन्नप्रतिष्ठेतेति दुस्तरं व्यसनमापन्नमिति । तस्मादिदन्तया यदात्मकं वस्तु परिच्छिन्दत् प्रत्यक्षं तद्व्यवहारमिवातद्व्यवहारमपि करोति । न नास्तीति ज्ञानस्य पृथक् प्रामाण्यमिति । तदेवाह । नानास्तीत्यादि । क्वचिद्स्तीति ज्ञानमपि लैङ्गिकमित्यभिधास्यते । नन्वभावप्रमाणनिरासे प्रमेयाभावनिरासादभ्युपेतहानिः स्यादित्याह—अभावेऽपि चेत्यादि ।

अभावेऽपि तनैवास्ति प्रमेयो वस्तुनः पृथक् ।
प्रत्यक्षं विशदज्ञानं त्रिधेन्द्रियमनैन्द्रियम् ॥

एतदुक्तं भवति नाभावो जैनैर्नाभ्युपगम्यते किन्तु न पृथगिति । तथाचसूत्रे ।

एतदपरे दूषयन्ति । प्रश्नकाले एवाभावावगमे तद्भावाशङ्का न निवर्त्तेत । तथा च तस्योत्तरम् । मया पूर्वं न दृष्टस्तत्र तेन तदानीमसौ नास्ति । नेदानीमितीदृश्यैव च संवित्तिस्तदानीं नासीन्नेदानीमिति ॥ तत्र प्रश्नकालेऽभावावगमः । ननु पूर्वमप्यवगमे स्मरणलक्षणदूषणमभिहितम् । उभयत्र दूषणसद्भावात् संशयोऽस्तु न निश्चयः । अतोऽभावस्य प्रमाणान्तरगम्यत्वे पूर्वोक्त एव न्यायो न त्वनन्तराभिहितः । अत्रोच्यते । एतावदुक्तमभावो नेन्द्रियसंनिकर्षाभावान्न प्रत्यक्षगम्योऽभाव इति । तदसत् । संनिकर्षस्य पूर्वमेव निरस्तत्वात् । प्राप्यकारित्वे चक्षुषः स्पर्शनेन्द्रियस्येव वस्त्वादिना दाहाद्यापद्येत । तथाऽप्राप्यकारित्वेऽपि किं न भवति? । अयोग्यत्वान्नेति चेत् । तर्हि योग्यतैव ग्रहणनिबन्धनं, न सम्बन्धस्तेन भाववदभावेऽपि योग्यत्वादक्षमध्यक्षमुत्पादयति । किं च नेन्द्रियसंबन्धात्प्रत्यक्षं वस्तु किं तु प्रत्यक्षविषयत्वात् । अन्यथाकाशादेरपि प्रत्यक्षता स्यात् । तथा वा चक्षुषि रसस्यापि प्रतिभासो भवेत् । तत्रापि संयोगसंयुक्तसमवायद्वारेणैकार्थसमवायस्य वा संयुक्तविशेषणभावस्य वा भावात् । ननूक्तं योग्यत्वादिन्द्रियस्य दि त्वभावं विनैव योग्यतैव नास्ति । ननु भावांशे कथं योग्यता? । तद्विषयज्ञानोत्पत्तेरिति चेत् । अभावांशेऽपि समानम् । तथा अस्तीति ज्ञानस्येव नास्तीति ज्ञानस्यापीन्द्रियान्वयव्यतिरेकानुविधानं तुल्यमस्त्येतस्किन्त्वन्यस्मात सिद्ध तद्भावभावित्वम् । यथा धूमादग्निदर्शने रूपज्ञानस्य चेन्द्रियजत्वं तद्गतरूपज्ञानस्य तस्य रूपदर्शने सति भावात् । एवमिहापि भूतलग्रहणे सति नास्तीति विज्ञानस्य भावे तद्भावभावित्वं द्रष्टव्यम् ।

गृहीत्वा वस्तुसद्भावं स्मृत्वा च प्रतियोगिनम् ।

मानसं नास्तिताज्ञानं जायते ऽक्षानपेक्षणादिति ॥

तदयुक्तम् । दूरादग्नौ स्पर्शज्ञानं सहचररूपोपलम्भादानुमानिकमिह भूतलस्य तत्प्रतिपत्तेश्च लिङ्गत्वानिषेधान्न संन्यासः । यथा च भवतां भूतलेऽनुपलभ्यमानेऽस्तीति ज्ञानस्य । ततः परं पुनर्वस्तुधर्मैर्जात्यादिभिर्यया बुद्ध्यावसीयते सापि प्रत्यक्षत्वेन सम्मतेत्यभिधानात्प्रत्यक्षता ? तथा नास्तीति ज्ञानस्यापि । किञ्च भावांशस्य ग्रहणं किं वस्त्वन्तरसंसृष्टस्य किं वासंसृष्टस्य ? । यदि संसृष्टस्य तदा प्रत्यक्षबाधितत्वादभावः प्रमाणं न स्यात् । अथासंसृष्टस्य तदा कथं भावस्य प्रत्यक्षता । अथ वस्तुमात्रमेव प्रतीयते न वस्त्वन्तराभावः । तत्किं वस्त्वन्तर तत्र प्रतिभाति ? । नेति चेत् । तत् कथं न तदभावः प्रत्यक्षग्राह्यः । अथ प्रत्यक्षेण न तद्भावो नाप्यभावः प्रतीयते । तदसत् । एवं ह्यप्रवृत्तिनिवृत्तिकं जगत् स्यात् । तदुक्तम् । न ह्ययमनलं पश्यन्नप्यनलमेव पश्यति । किं तु सलिलमपि । ततस्तदर्थि न तिष्ठेन्नप्रतिष्ठेतेति दुस्तरं व्यसनमापन्नमिति । तस्मादिदन्तया सदात्मकं वस्तु परिच्छिन्दत् प्रत्यक्षं सद्व्यवहारमिवासद्व्यवहारमपि करोति । न नास्तीति ज्ञानस्य पृथक् प्रामाण्यमिति । तदेवाह । नानास्तीत्यादि । क्वचिद् स्तीति ज्ञानमपि लैङ्गिकमित्यभिधास्यते । नन्वभावप्रमाणनिरासे प्रमेयाभावनिरासाभ्युपेतहानिः स्यादित्याह— अभावेऽपि चेत्यादि ।

अभावेऽपि तनैवास्ति प्रमेयो वस्तुनः पृथक् ।
प्रत्यक्षं विशदज्ञानं त्रिधेन्द्रियमनैन्द्रियम् ॥

एतदुक्तं भवति नाभावो जैनैर्नाभ्युपगम्यते किन्तु न पृथगिति । उक्तञ्चसूत्रे ।

अन्नोन्नाणुगयाणं इमं च तं वित्ति विभयणमजुत्तं ।
जहखीरपाणियाणमिति ।

नन्वशेषाभावानुभवे युगपत्स्मरणमुत्पद्यते तेन किञ्चि-तद्यतो नानुभूतं स्मर्यत एव किन्त्वननुभूतमेव । तेनाशेषाभावानुभवेऽपि यस्य प्रतिषिध्यमानपदार्थस्मरणे प्रश्नादिनिमित्तमस्ति तस्यैव स्मृतिर्नान्येषामिति । विरोधपरिहारञ्चाभिधास्यतीति । तदेवं न प्रमाणाभावः प्रमाणमित्यतः साधूक्तम् । द्विधामेयविनिश्चयादिति यत् सूत्रे द्वैविध्यं प्रत्यक्षं च परोक्षं चेत्युक्तं तदेव व्याख्यातुमाह—। प्रत्यक्षमिति । प्रतिगतमक्षं प्रत्यक्षमिति । प्राप्तापन्नेत्यादिना तत्पुरुषे परवल्लिङ्गताप्रतिषेधात् त्रिलिङ्गः प्रत्यक्षशब्दः । गमनक्रियेव गोत्वस्याक्षाश्रितत्वसमर्थनात्कारित्वस्योपलक्षणम् । मानसजेऽपि तच्छब्दवाच्यता नायुक्ता । इदानीं तस्य लक्षणमाह । विशदमिति । अथ किमिदं वैशद्यम् । न तावन्निर्विकल्पकत्वम् । अनभ्युपगमात् । अथ स्पष्टत्वं तदा बालापेक्षया वृद्धस्यापि प्रत्यक्षं न स्पष्टम् । तथा दूरवस्तुनि प्रत्यक्षं चेति । अथ तच्छ्रुतं तदा यदिन्द्रियजत्वादय त्रिधा श्रुतं प्रत्यक्षपूर्वकं लैङ्गिकं शाब्दं चेति । तन्न । प्रत्यक्षपूर्वकस्य प्रमाणमूलत्वं लैङ्गिकत्वात् । न च तदप्रमाणम् । नापि लैङ्गिकम् । व्याप्तिस्मरणादेरनुभावात् । यत्प्रत्यक्षेण परोपदेशमन्तरेणा शब्दोल्लेखि ज्ञानं जन्यते तत्प्रत्यक्षपूर्वकं श्रौतम् । तद्वाप्रमाणम् । प्रत्यक्षनिमित्तार्थप्रवर्तमानत्वात् । तस्माद्युक्तं त्रिधा श्रुतमविप्लवमिति तदर्थगतम् । विप्लवाभावत्वात् । न चैवं न दूरस्य प्रत्यक्षेऽपि वस्तुनि पूर्वापरार्थक्रियाकारित्व निश्चयः क्रियते नित्यानित्यत्वनिश्चयो वा तल्लैङ्गिकम् । न चैवं

दूरदेशादौ वस्तुन्यस्पष्टज्ञानमिति । तन्नेदं लक्षणं व्यापीत्याशङ्क्याह । वैशद्यमिदन्त्वेनावभासनमिति । इदमो भाव इदन्त्वम् । साक्षात्कारित्वमित्यर्थः । तेनानुमानादेरसाक्षात्कारिणो निरासः । इदानीं व्यक्तिभेदमाह । त्रिधेति । त्रयो विधाः प्रकारा यस्य तत्त्रिविधम् । त्रैविध्यमेवाह । इन्द्रियं तद्विपरीतमनिन्द्रियम् ।

योगजं चेत्यवैशद्यं मिदन्त्वेनावभासनम् ।
जीवांशात्कर्मनिर्मुक्तादिन्द्रिये वार्थितिक्षः ॥

योगश्चित्तवृत्तिनिरोधो घातिकर्मक्षयहेतुस्तस्माज्जातं योगजम् । चः समुच्चये । इतिरवधारणे । इयदेव प्रत्यक्षं न मानसादि । अथ किमिदमिन्द्रियं तत्र विप्रतिपत्तिदर्शनात् । तथाहि—भौतिकानीन्द्रियाणि स्थापयितुं वैशेषिकः पूर्वपक्षमुत्थापयति । नन्वाहंकारिकत्वादिन्द्रियाणाम् । तथाहि—प्रकाशकत्वं सत्त्वधर्म इति सात्त्विकादहंकारादिन्द्रियाणामुदयः । किमत्र प्रमाणमिति चेत् । अप्राप्यकारित्वम् । तच्च शाखाचन्द्रमसोस्तुल्यकालग्रहणाद्विज्ञातम् । अन्यथा हि शाखासंबन्धोत्तरकालं चिरेण चन्द्रमसा संबन्धाद्युगपद्ग्रहणं न स्यात् । अस्ति चातोऽप्राप्यकारित्वम् । तच्च भौतिकेषु न सम्भवति । प्रदीपादिषु सम्भवादर्शनादित्यभौतिकत्वमस्येन्द्रियाणामपि प्रतिपत्तव्यम् । यतु दूरान्तस्थादेव तथा महदणुप्रकाशकत्वात् । भौतिकं हि यावत्परिमाणं तावत्येव क्रियां कुर्वद्दृष्टमिति । तथा स्वल्पपरिमाणं कस्यापि महान्तं प्रदेशं प्राप्य क्रियां न करोतीति दृष्टं किं तर्हि स्वप्रमाणप्रदेश एवेति । चक्षुश्चाल्पपरिमाणमपि पर्वतादि [illegible] । [illegible] न भौतिकमिति । [illegible]
[illegible]

द्ग्राहकं प्रयेन्न द्रव्यसामान्यादेरिति । एवं शेषेष्वनियमेन स्वगुणग्राहकत्वप्रसङ्गः । न चैतद्दृष्टम् । अतो न भौतिकत्वम् । इतश्च न भौतिकानीन्द्रियाणि । इन्द्रियत्वात् । यद्यदिन्द्रियं तत्तदभौतिकं दृष्टं यथा मनस्तथा चेन्द्रियाण्यमूनि तस्मान्न भौतिकानीति । यत्तावदप्राप्यकारित्वादिति साधनं तदसिद्धम् । व्यवहितार्थानुपलब्ध्या प्राप्तेरुपलम्भात् । अन्यथा हि व्यवहितस्याग्रहणम् । अन्तिके च ग्रहणं न स्यात् । अप्राप्तेरुभयत्र विशेषात् । आवरणानुपपत्तिश्च । प्राप्तिप्रतिषेधकत्वात् । तथा च प्राप्तिप्रतिषेधं कुर्वदावरणमग्रहणाय कल्पते । दृष्टं चावरणसामर्थ्यं दूरे प्रकाशकत्वमतः प्रदीपस्येव प्राप्तार्थपरिच्छेदकत्वम् । तथा चक्षुः प्राप्तार्थपरिच्छेदकम् । व्यवहिताप्रकाशकत्वात् । यद्यद्व्यवहिताप्रकाशकं तत्तत् प्राप्तार्थपरिच्छेदकम् । यथा प्रदीपः । तथा च व्यवहिताप्रकाशकं चक्षुस्तस्मात्प्राप्तार्थपरिच्छेदकमिति प्राप्तिसद्भावे प्रमाणोपपत्तेः । शखाचन्द्रमसोः कालभेदेन सम्बन्धेऽप्याशुभावोत्पलपत्रशतव्यक्तिभेदाभिमानवद्युगपद्ग्रहणाभिमानः । यच्च महदणुप्रकाशकत्वं तदप्यन्यथासिद्धत्वादसाधनम् । तथा हि—चक्षुर्बहिर्गतं बाह्यालोकसम्बन्धोद्विषयपरिमाणमुत्पद्यते । महदाद्यर्थप्रकाशनम्, अभौतिकत्वादिति । यच्चोक्तम् । तैजसत्वाद्रूपस्यैव प्रकाशकमित्येतदसत् प्रदीपेऽदर्शनात् तर्हि प्रदीपस्तैजसत्वाद्रूपस्यैव प्रकाशको दृष्टः, किं तर्हि रूपद्रव्यसामान्यादेरिति । न च नैव विषयश्चक्षुषेऽतस्तैजसत्वं न विरुध्यते इति रूपादिषु मध्ये नियमेन रूपप्रकाशकत्वं तु तैजसत्वेऽनुमानमिति वक्ष्यामः । नियमेन गन्धादिषु गन्धस्यैव प्रकाशकत्वं च पार्थिवत्वात् घ्राणादेरिति । न चैकप्रकृतिकत्वे विषयव्यवस्थोपलब्धेरिति नानाप्रकृतिकत्वम् । तथाह्येकस्मात्कारणादुपजाताः प्रदीप-

भेदाः समानविषयाइत्युपलब्धं तद्वदिन्द्रियेषु समानविषयत्वं स्यात् । दृष्टा तु घ्राणादेर्गन्धादिषु व्यवस्थेति नानाप्रकृतिकत्वम् । तथा च नानाजात्युपादानानीन्द्रियाणि । द्रव्यत्वे सति-प्रतिनियतविषयत्वात् । यद्यद्द्रव्यत्वे सति प्रतिनियतविषयं तत्तन्नजात्युपादानं दृष्टम् । यथा व्यजनानिलप्रदीपकस्तुरिकादेस्तथा चैतानि द्रव्यत्वे सति प्रतिनियतविषयाणि । तस्मान्न, जात्युपादानानीति । तथाहि—ज्ञानशब्देष्वेकजात्युपादानत्वं प्रतिनियतविषयत्वं चेति व्यभिचारः । तदर्थं द्रव्यत्वे सतीति विशेषणम् । न चास्य पक्षधर्मत्वादिकम् । अतोऽप्रमाणत्वमिति प्रसङ्गात् । यथाभौतिकत्वेऽनुमानमिन्द्रियत्वादिति । अत्र भूतादभिनिर्वृत्तं भौतिकं तत्प्रतिषेधेन च कारणान्तरप्रभवत्वं विशेषनिषेधस्य शेषाभ्यनुज्ञाविषयत्वादिति साध्यविकलो दृष्टान्तस्तथा च मनसि भौतिकत्वम् । नाप्यभौतिकत्वमिति । अथ भूतादुत्पत्तिप्रतिषेधेन नित्यत्वम् । तत्राप्यभ्युपगमव्याघातो मनस्यपि नित्यत्वानभ्युपगमात् । इन्द्रियत्वं चोक्तविशेषणस्यापरोक्षज्ञानजनकत्वेन भूतादुत्पत्तिप्रतिषेधेनेत्यन्यथासिद्धम् । निर्मूलं चेन्द्रियाणामहङ्कारप्रभवत्वम् । तत्सद्भावे प्रमाणासंभवात् । तथाहि—प्रमाणसद्भावे सत्येषा प्रक्रिया तस्य चासत्त्वं वक्ष्यमाणमिति । येषां वा संसारमण्डलव्यापीनीन्द्रियाणि तेषामशेषविषयग्रहणप्रसङ्गः । अथादृष्टवशान्नियतदेशावृत्तिर्व्यज्यत इति चेत् । अत्र वृत्तीनां तादात्म्येन किंचिदुक्तं स्यात् । व्यतिरेके तु तदेवेन्द्रियमिति संज्ञामात्रमेव । अथ नियतविषयाद्यथोपान्यथानुपपत्त्या तदाकारतैवेन्द्रियस्य परिनिश्चीयते । तन्न । अन्यथानुपलम्भात् । तथाहि—। नियतार्थसंनिकर्षेऽप्युपलम्भो घटत एव । न च व्यापित्वं परस्याभीष्ट-

तरमिति नेह प्रत्यन्यतइति विप्रतिपत्तीः प्रतीत्याह—। जीवांशात्कर्मनिर्मुक्तादिति । जीवप्रदेश एव कर्मक्षयोपशमत्वादिन्द्रियं नान्यत् । तथाहि—किं चक्षुराद्येव रूपादि जानाति किं वा प्रकाशयति? । प्रथमपक्षे एकस्मिन्नपि शरीरे पञ्चात्मानः प्राप्नुवन्ति । अहंकारभूतानामचेतनत्वात्तत्प्रकृतेरिन्द्रियस्य कथं द्रष्टृत्वमिति । अथ प्रकाशयति, किं न तमसि बिडालादेर्भूयस्तेजः प्रकाशयत्वेवं किं न मनुष्यस्य । स्वल्पत्वात् तेजस इति चेत् । बहूनामेकत्र दृष्टिपाते किन्न प्रकाशयति ? । अपि च तमः किं तेजोभावः, किं वा वस्त्वन्तरमिति । अभावस्य नायनरश्म्यावारकत्वायोगात् । वस्त्वन्तरमपि रूपमेव रूपस्यावरणम् । अन्यथा वाय्वादेरप्यावारकत्वं स्यात् । ततस्तमसा रूपवता चक्षूरश्मीनां संयोगे तमोदर्शनमासज्येत । कृष्णरूपं दृश्यत इति चेत् । न, तथाविधदर्शनस्य भिन्नाक्षेपिभावात् । तन्नेन्द्रियं भौतिकं किंत्वात्मा चेन्द्रियम्—तदुक्तम्—लब्ध्युपयोगो भावेन्द्रियमाख्यधितिष्ठत इति । एतदुक्तं भवति । अनुपहतचक्षुरादिदेशेष्वेवात्मनः कर्मक्षयोपशमस्तेनास्थगितगवाक्षतुल्यानि चक्षुरादीन्युपकरणानि । आत्मनो ज्ञानोत्पत्तौ कर्मणो वैचित्र्यान्यथात्मनोऽव्यापित्वान्मुक्तात्ममनःसंयोगजं प्रत्यक्षं किं नोपपद्यते । यच्च भौतिकत्वसिद्धौ शाखाचन्द्रमसोः स्फुटतस्यापि युगपत्प्रतिभासस्य भ्रान्तत्वमाशुकारित्वादुक्तं तदीश्वरज्ञानस्यापि युगपदनेकार्थग्राहिणो भ्रान्तत्वमापादयति । न च तत्क्रमवत् । अशेषाग्रहप्रसङ्गात् । एकत्रैवानन्तपर्याये क्षीणत्वात् । यच्च विषयनैरपेक्ष्य विकारित्वं चक्षुषस्तत्साधनधर्ममनुकरोति, तदेवं फल्गुप्रायं परोदितमुपेक्षितमिति । लैङ्गिकवदिन्द्रियस्यव्यपदेशः । तेन द्रव्येन्द्रियेण विना यत्प्रत्यक्षं तदनिन्द्रियम् । तत्र ग्रन्थकारम-

तभेदान् दर्शयन्नाह—। स्मृत्यूहादिकमित्यादि ।

**ज्ञानमिन्द्रियजं ज्ञानं विनेन्द्रियमनिन्द्रियम् ।**
**स्मृत्यूहादिकमित्येके प्रातिभं च तथा परे ॥**
**स्वप्नविज्ञानमित्यन्ये स्वसंवेदनमप्यतः ।**

स्मृतिश्च वितर्कलक्षणा । आदिग्रहणादवायस्तद्रूपमनिन्द्रियम् । एकेऽनन्तवीर्यादयः । प्रतिभया श्वोमे भ्राताऽऽगमिष्यत्येवं रूपया निर्मितं प्रातिभं वा परे टीकाकृतः । स्वप्नविज्ञानं यत्स्वप्नमुत्पद्यते तद्-न्येऽनन्तकीर्त्यादयः । स्वसंवेदनमेव नोऽस्माकमिति । एवं मन्यते वार्तिककारः अथादिमां भाविन एव ज्ञानस्य प्रामाण्यमुचितं न स्मृतेः । अर्थमन्तरेणापि तस्याभावात्प्रत्यक्षादेस्त्वव्यभिचारनिमित्ताभिधानात्कस्यचिद् व्यभिचारेऽपि न दोषः । नन्वेवं स्मृतेरव्यभिचारनिमित्तमस्ति । अमूढस्मृतेस्तु पूर्वप्रत्यक्षफलत्वान्न पृथक्प्रमाणम् । ऊहस्तु संशयविशेष एव कुतस्तत्प्रमाणं स्यात् । अवायस्तु प्रत्यक्षानुमानफलत्वेन न ताभ्यां प्रमाणान्तरमिति । काकतालीयसंवादयोरपि प्रातिभस्वप्नविज्ञानयोः प्रमाणत्वेन किञ्चिन्न प्रमाणं स्यात् । तस्मात् स्वप्नस्य ज्ञानात्मनो वेदनमेव प्रमाणमिति । मानसं तु मनोऽभावान्निरस्तम् । अथ मनोऽभावे योग्येऽपि विषये कथं युगपद्ज्ञानानुत्पत्तिः । उक्तमेतत् । उपयोग आभिमुख्यमिति । तद्यत्रात्मनस्तन्न भवति तत्रानुत्पत्तिरिति । आभिमुख्ये तु युगपदपि । अथ भ्रान्तासौ । नैतदस्ति । एवं हि सौगतस्य क्षणिकत्वे सान्त एव भावप्रसङ्गदूषणं सुदूरं निरस्तं स्यात् । तदुक्तम्—

पङ्क्तिभिर्व्यवधानेऽपि भात्यव्यवहिते च या ।
साध्वंसिनोर्पस्य नैरन्तर्यं न वेत्ति किम् ॥

तरमिति नेह प्रत्यन्यतइति विप्रतिपत्तीः प्रतीत्याह—। जीवां शात्कर्मनिर्मुक्तादिति । जीवप्रदेश एव कर्मक्षयोपशमत्वादिन्द्रियं नान्यत् । तथाहि—किं चक्षुराद्येव रूपादि जानाति किं वा प्रकाशयति? । प्रथमपक्षे एकस्मिन्नपि शरीरे पञ्चात्मानः प्राप्नुवन्ति । अहंकारभूतानामचेनत्वात्तत्प्रकृतेरिन्द्रियस्य कथं द्रष्टृत्वमिति । अथ प्रकाशयति, किं न तमसि विडालादेर्भूयस्तेजः प्रकाशयत्वेवं किं न मनुष्यस्य । स्वल्पत्वात् तेजस इति चेत् । बहूनामेकत्र दृष्टिपाते किन्न प्रकाशयति ? । अपि च तमः किं तेजोभावः, किं वा वस्त्वन्तरमिति । अभावस्य नायनरश्म्यावारकत्वायोगात् । वस्त्वन्तरमपि रूपमेव रूपस्यावरणम् । अन्यथा वाय्वादेरप्यावारकत्वं स्यात् । ततस्तमसा रूपवता चक्षूरश्मीनां संयोगे तमोदर्शनमासज्येत । कृष्णरूपं दृश्यत इति चेत् । न, तथाविधदर्शनस्य भिन्नाक्षेपिभावात् । तन्नेन्द्रियं भौतिकं किंत्वात्मा चेन्द्रियम्—तदुक्तम्—लब्ध्युपयोगौ भावेन्द्रियाण्यधितिष्ठत इति । एतदुक्तं भवति । अनुपहतचक्षुरादिदेशेष्वेवात्मनः कर्मक्षयोपशमस्तेनास्थगितगवाक्षतुल्यानि चक्षुरादीन्युपकरणानि । आत्मनो ज्ञानोत्पत्तौ कर्मणो वैचित्र्यान्यथात्मनोऽव्यापित्वान्मुक्तात्ममनःसंयोगजं प्रत्यक्षं किं नोपपद्यते । यच्च भौतिकत्वसिद्धौ शाखाचन्द्रमसोः स्फुटतस्यापि युगपत्प्रतिभासस्य भ्रान्तत्वमाशुकारित्वादुक्तं तदीश्वरज्ञानस्यापि युगपदनेकार्थग्राहिणो भ्रान्तत्वमापादयति । न च तत्क्रमवत् । अशेषाग्रहप्रसङ्गात् । एकत्रैवानन्तपर्याये क्षीणत्वात् । यच्च विषयमवाप्य विकासित्वं चक्षुषस्तत्साधनधर्ममनुकरोति, तदेवं फल्गुप्रायं परोदितमुपेक्षितमिति । लैङ्गिकवदेन्द्रियत्वव्यपदेशः । तेन द्रव्येन्द्रियेण विना यत्प्रत्यक्षं तदनिन्द्रियम् । तत्र ग्रन्थकारम-

वस्तु न योगिप्रत्यक्षवदिन्द्रियजप्रत्यक्षं निश्चाययति। अत एव तद्व्यवहारप्रत्यक्षम्। योगजं तु साकल्येन निश्चाययति। तेन निश्चयप्रत्यक्षमिति। इदानीं विशेषेण विषयविप्रतिपत्तिं निराकर्तुमाह–द्रव्यपर्यायेत्यादि।

द्रव्यपर्यायसामान्यविशेषास्तस्य गोचराः।
अविस्पष्टास्त एव स्युरनध्यक्षस्य गोचराः॥

तल्लक्षणस्य वक्ष्यमाणत्वात्तस्य प्रत्यक्षस्य विषय इति संक्षेपार्थमिहैव परोक्षस्य विषयविप्रतिपत्तिं निराकुर्वन्नाह–। अविस्पष्टा इति। अनिदन्तयावभासमाना द्रव्यपर्यायसामान्यविशेषाः परोक्षस्य विषया इति। ननु बाह्यार्थाभावात् कथं द्रव्यादिनां विषयत्वप्रत्यक्षादिः। अत्रोच्यते। कथमर्थाभावः?। तत्साधकप्रमाणाभावादिति चेत्। विशदतरदर्शनमेव तत्साधकं प्रमाणम्। स्वप्नदर्शनवदपारमार्थिकमिति चेत्। ननु किमिदमपारमार्थिकत्वम्। अर्थशून्यत्वमिति चेत्। इतरेतराश्रयत्वम्–तथाहि–। अर्थशून्यत्वेऽपारमार्थिकत्वमपारमार्थिकत्वेऽर्थशून्यत्वमिति। येन चार्थो न दृष्टः, स कथं ब्रूयादर्थो नास्तीति। परप्रसिद्ध्येति चेन्न। परप्रसिद्धेरप्रमाणत्वात्। प्रमाणत्वे वा कथं तन्निषेध इति। अपि चानुभूयमानस्यापि स्वप्नदृष्टान्तेन यद्यर्थस्याभावो ज्ञानस्याप्यभावः स्यात्। स्वप्नानुभूतस्य चार्थस्यासत्यत्वं किमप्रतिभासमानत्वात्, किं चार्थक्रियावैकल्यादिति?। न तावदाद्यः पक्षः। तदानीं तस्यानुभूयमानत्वादुपलब्धिः सत्येति चाभ्युपगमः। अथार्थक्रियावैकल्यात् तर्ह्यर्थक्रियाकारी जाग्रद्दशायामर्थः सत्यः स्यात्। विसंवादादिति चेत्। कोऽयं विसंवादः?। ज्ञानान्तरेणाग्रहणमिति चेत्। तर्हि जाग्रद्दशायां तदस्तीति सत्यता स्यात्। बाधि-

तत्वमिति चेत् । किमिदं बाधितत्वम् ? । नेदमिति प्रत्ययोत्पत्तिरिति चेत् । जाग्रत्प्रत्ययेषु तदभावात् सत्यतास्तु । न हि सत्यस्तंभप्रत्ययेषु कदाचिद्बाधकोत्पत्तिरस्ति । अथ स्वप्नप्रत्ययेऽप्यर्थक्रियाकारित्वं संवादाबाधितत्वमस्ति । न च सत्यतोपगतार्थवादिना तेन । न तत्सत्यत्वे निबन्धनमिति । नैतदस्ति । सर्वोपि भ्रान्तिनिबन्धना । यथा मरीचिकासु जलभ्रान्तिः । तथो च स्वप्नप्रत्यये सत्यर्थक्रियानुभवपूर्वकं स्मरणमात्रकमेव न तु तत्र किञ्चिदर्थक्रियादि । अन्यथा जाग्रदननुभूतस्य किं न कस्यचिदर्थस्य तत्रोपलम्भो भवति । अपि चार्थनिषेधः किं प्रमाणेन क्रियते, किं वाऽप्रमाणेन ? । प्रमाणेन कथं तन्निषेधः ? । प्रमाणमपि तन्निषेधकं बाविनाशकत्वेन, किं वा विपरीतार्थोपस्थापकत्वेन, किं वा ग्राहकत्वेनेति ? । प्रथमपक्षे सिद्धोऽर्थः । न ह्यसिद्धस्य विनाशः संभवति । द्वितीयेऽपि पक्षे अर्थोऽर्थस्य बाधक इति कथं नार्थसिद्धिः । अग्राहकं तु संदेहकारि भवतु कथं तन्निषेधकं दृश्यस्य । कथं नेति चेत् । ननु पूर्वदृष्टस्यैकज्ञानसंसर्गिण्युपलभ्यमाने आरोपाद्दृश्यत्वम् । नचायमत्यन्तादृष्टस्य प्रकारः संभवति । ज्ञानात्मन्युपलभ्यमानेऽदृष्टस्यापि तादात्म्येन निषेध इति चेद्भवतु ज्ञानात्मनो न भिन्नस्य । अथ भिन्नस्यानुपलम्भान्निषेधः । तत्किमयं नीलाद्याकारोऽनुभूयते न वेति? । अयास्त्ययमाकारः किं तु ज्ञानात्मनैव । जडस्य प्रकाशायोगात् । तदेवाह—। न जडस्येत्यादि ॥

न जडस्यावभासोऽस्ति भेदाभेदविकल्पनात् ।
न भिन्नविषयं ज्ञानं शून्यं वा यदि वाततः ॥

प्रकाशस्य भेदे जडस्य किमायातम् । अभेदे जडमेव न

स्यात् तेन न भिन्नविषयं ज्ञानं किं त्वात्मविषयमेव । न ह्यभिन्नप्रकाशकाः सतां दधानाः स्तम्भादयो जडा भवितुं युक्ताः । अथ कोऽयं प्रकाशः ? । किं ज्ञानमथ ज्ञानविषयता ? । प्रथमपक्षे स्यादिदम् । द्वितीये तु कथमर्थस्य ज्ञानता? । न हि प्रदीपेन प्रकाश्यमानाः स्तम्भादयः प्रदीपा भवन्ति । अथ तेऽपि प्रकाशस्वभावास्तदानीमेवोत्पद्यन्ते । अन्यथाऽन्धकारेऽपि प्रकाशयेरन् । अस्ति तावदन्धकारेऽपि स्तम्भादिः । प्रकाशपर्यायता तु प्रदीपादुत्पद्यते तथार्थस्य प्रकाशपर्यायता ज्ञानाद्भवतु कथमर्थाभावः । अथ पूर्वमर्थास्तित्वे किं प्रमाणम् ? । निषेधे किं प्रमाणम् । तर्ह्यस्तु संशयः । नैतदस्ति । यतः किमेकमेव ज्ञानं क्षणस्थायि तेन पूर्वापरयोः कालयोरर्थसत्तां न प्रतिपद्यते किं वा अनेकानि परस्परकर्मतां न प्रतिपद्यन्ते । ? सर्वेषां वर्त्तमानविषयत्वात् । तेन विदन्ति प्रथमपेक्षणादूर्द्धं न किञ्चिदनुभूयते । तथासत् । मरणपर्यन्तमनुभवस्य बाधितस्योत्पत्तेः । द्वितीयेऽपि ज्ञानानां परस्परानतुगमेऽप्यात्मना देशकालाकारविपर्ययस्यार्थस्यानुभूयमानत्वात् । एतेन सहोपलम्भनियमो निरस्तः । सादरे इव सहशब्दस्यैकत्ववाचित्वाद्विज्ञानार्थयोश्च भेदस्य प्रतिपादितत्वादिति । अथ सर्वे प्रत्यया निरालम्बनाः । प्रत्ययत्वात् । स्वप्नप्रत्ययवत् । इत्यर्थाभावस्तर्हि आत्मवेदनमपि प्रत्ययः सोऽपि निरालम्बनः स्यात् । इष्यत एवेति चेत् । तदेवाह— मूर्यं वा यदि वा ततः । प्रतिभासमानत्वादिति । तदसत् । यतः ज्ञानशून्यवादिनोऽनुमानं किं गृहीतव्याप्तिकमुदेति, किं वागृहीतव्याप्तिकम् ? । अगृहितव्याप्तिकं कथमनुमानम् ? । व्याप्तिग्रहणं च न भेदेनैव । इतरेतराश्रयदोषप्रसङ्गात् । ज्ञानान्तरेण चेत् । कथमद्वैतं शून्यं वा । तत्र

कश्चित्साधनमर्थनिरासे ज्ञानशून्यवादिनः । तदेवाह— । ज्ञानशू न्यवत इत्यादि ।

ज्ञानशून्यवतो नास्ति निरासेऽर्थस्य साधनम् ।
संवित्सिद्धप्रतिक्षेपे कथं स्याज्ज्ञव्यवस्थितिः ॥

अनुभवसिद्धस्य चार्थक्रियाकारिणः सकलजन्तुसाधारणस्यार्थस्य निषेधज्ञानशून्ययोरपि कथं स्याद् व्यवस्थितिरिति । तदेवाह । संवित्सिद्धस्येत्यादि ॥ अथायमर्थः, किमवयविरूपः, किंवा परमाणुस्वरूप इति ? । तत्रावयविनो भवद्भिरेव निरस्तत्वात् परमाणूनामप्रतिभासनान्न बाह्योऽयमाकारः किन्तु ज्ञानाकारवत्तया प्रतिभातीति । ननु ज्ञानाकारेऽप्येष प्रसङ्गो दुर्निवारः । तथाहि-तद्देशत्वान्नीलानीलत्वादिके विरोधः चित्रद्वैतेऽपि समानः । न च ज्ञानं परमाणुमात्रं चकास्ति । अत यथा बाह्यस्यैकावयवावरणेऽपि अवयवान्तरप्रतिभासनतो विरोधः नैवं ज्ञानाकारस्य । माभूदयं, नीलानीलादिकः केन निवार्यते । यथा चायमर्थस्तथा सविकल्पकसिद्धौ प्रतिपादयिष्यतीति । अत्र बहु वक्तव्यं तच्च नोच्यते ग्रन्थविस्तारभयादिति । तदेवं बाह्यमर्थं व्यवस्थाप्येदानीं द्रव्यादीनां लक्षणमाह—पर्यवसन्तीत्यादि ।

स्यन्ति पर्याया द्रव्यं द्रवति सर्वदा ।
परिणामे यस्तत्सामान्यं द्विधा स्थितम् ।

'वसन्ति क्षणिकत्वाद्व्यावर्त्तन्त इति पर्यायाः । पर्यायलक्षणं चैतत्सहभाविनां गुणानां रूपादीनामिति । द्रवति तांस्तान्पर्यायान् परिणामनित्यत्वादिति । द्रव्य-
...कल्पितं सामान्यं पूर्वमेव निरस्तमिदानीं स्था-

निमतं सामान्यं व्यवस्थापयन्नाह । सदृशः परिणामइत्यादि । इह भावानां सदृशपरिणतिः सामान्यं समानाकारमामा न्यमिति न्यायात् । अन्यथा स्वरूपसामान्यमन्तरेणान्यसामान्ययोगेऽपि समानरूपताकारास्यैव नोपपद्यते । यदि वा असमानानामपि सामान्ययोगात् समानरूपता भवति, किं न महिषाश्वयोः । पराभ्युपगतस्य सामान्यस्य तत्रापि भावात् । विजातीयत्वान्नेति चेत् । इतरेतराश्रयत्वम् । तथाहि—विजातीयत्वे सामान्यायोगः, सामान्यायोगे च विजातीयत्वमिति । अपि च सामान्येनासमानानां यदि समानरूपता जन्यते न स्वकारणादेव सा तेषामजन्यतः ।

तदप्यन्यादपि कुर्वत्यातिशयो न्यतः परम् ॥

तस्माद्वस्तुस्वरूपमेव समानपरिणामं सामान्यं नान्यत् । नाप्यवस्तु । तस्य निषेत्स्यमानत्वादिति । तच्चोर्ध्वतारूपं तिर्यग्रूपं चेत्याह—द्विविधेति । एवं सामान्यलक्षणमभिधायेदानीं विशेषस्वरूपमाह—। विपरीत इति ।

विपरीतो विशेषस्तु तान् युगपद्व्यवस्यति ।
तेन तत्कल्पनाज्ञानं न तु सादृश्ययोगतः ॥

साधारणाद्विपरीतः सजातीयविजातीयेभ्यो व्यावृत्तोऽसाधारणवस्तुस्वभावो विशेष इति । इदानीं विकल्प- [illegible] एव सविकल्पकमित्याह । तान् युगपदिति । [illegible]

कश्चित्साधनमर्थनिरासे ज्ञानशून्यवादिनः । तदेवाह—। ज्ञानशू न्यवत इत्यादि ।

ज्ञानशून्यवतो नास्ति निरासेऽर्थस्य साधनम् ।
संवित्सिद्धप्रतिक्षेपे कथं स्याज्ज्ञव्यवस्थितिः ॥

अनुभवसिद्धस्य चार्थक्रियाकारिणः सकलजन्तुसाध रणस्यार्थस्य निषेधज्ञानशून्ययोरपि कथं स्याद् व्यवस्थितिरिति तदेवाह । संवित्सिद्धस्येत्यादि ॥ अथायमर्थः, किमवयविरूप किंवा परमाणुस्वरूप इति ? । तत्रावयविनो भवद्भिरेव नि स्तत्वात् परमाणूनामप्रतिभासनान्न बाह्योऽयमाकारः कि ज्ञानाकारवत्तथा प्रतिभातीति । ननु ज्ञानाकारेऽप्येष प्रसङ्ग दुर्निवारः । तथाहि-तद्देशत्वान्नीलानीलत्वादिके विरोधः चि द्वैतेऽपि समानः । न च ज्ञानं परमाणुमात्रं चकास्ति । अ यथा बाह्यस्यैकावयवावरणेऽपि अवयवान्तरप्रतिभासलक्षणे विरोधः नैवं ज्ञानाकारस्य । माभूदयं, नीलानीलादिकः के निवार्यते । यथा चायमर्थस्तथा सविकल्पकसिद्धौ प्रतिपादयि ष्यतीति । अत्र बहु वक्तव्यं तच्च नोच्यते ग्रन्थविस्तारभया दिति । तदेवं बाह्यमर्थं व्यवस्थाप्येदानीं द्रव्यादीनां लक्षण माह—पर्यवस्यन्तीत्यादि ।

पर्यवस्यन्ति पर्याया द्रव्यं द्रवति सर्वदा ।
सदृशः परिणामे यस्तत्सामान्यं द्विधा स्थितम् ॥

पर्यवस्यन्ति क्षणिकत्वाद्व्यावर्तन्त इति पर्यायाः । पर्याया इत्युपलक्षणं चैतत्सहभाविनां गुणानां रूपादीनामिति । द्रवन्ति गच्छन्ति तांस्तान्पर्यायान् परिणामनित्यत्वादिति । द्रव्य- मिति । परपरिकल्पितं सामान्यं पूर्वमेव निरस्तमिदानीं स्वा-

त्मिकं सामान्यं व्यवस्थापयन्नाह । सदृशः परिणामइत्यादि । इह भावानां सदृशपरिणतिः सामान्यं समानाकारमनामान्यमिति न्यायात् । अन्यथा स्वरूपसामान्यमन्तरेणान्यसामान्ययोगेऽपि समानरूपताकारस्यैव नोपपद्यते । यदि वा समानानामपि सामान्ययोगात् समानरूपता भवति, किं न महिषाश्वयोः । पराभ्युपगतस्य सामान्यस्य तत्रापि भावात् । विजातीयत्वान्नेति चेत् । इतरेतराश्रयत्वम् । तथाहि—विजातीयत्वे सामान्यायोगः, सामान्यायोगे च विजातीयत्वमिति । अपि च सामान्येनासमानानां यदि समानरूपता जन्यते न स्वकारणादेव वा तेषामन्यतः ।

तत्पश्चादपि कुर्वत्याशिरवो कथं परम् ॥

तस्माद्वस्तुस्वरूपमेव समानपरिणामं सामान्यं नान्यत् । नाप्यवस्तु । तस्य निषेत्स्यमानत्वादिति । तच्चोर्ध्वतारूपं तिर्यग्रूपं चेत्याह—द्विविधेति । एवं सामान्यलक्षणमभिधायेदानीं विशेषस्वरूपमाह—। विपरीत इति ।

विपरीतो विशेषस्तु तान् युगपद्व्यवस्यति ।
तेन तत्कल्पनाज्ञानं न तु शब्दार्थयोजनात् ॥

साधारणाद्विपरीतः सकलसजातीयविजातीयेभ्यो व्यावृत्तोऽसाधारणवस्तुस्वभावो विशेष इति । इदानीं विषयद्वारेणैव सविकल्पकसिद्धिमाह । तान् युगपदिति । युगपदेककालं द्रव्यादीन् व्यवस्यति निश्चीयते यतः तेन तज्जन्यं कल्पनाज्ञानं सविकल्पकमित्यर्थः । नन्वभिलापसंसर्गयोग्यप्रतिभासप्रतीतिः कल्पना । तथाहि—कल्पना योजना सा च न वस्तुनो रूपं निरंशत्वाद्वस्तुनः किं तु स्वबुद्धिनिर्मिता । अत एव जात्यादियोजनाऽपि शब्दयोजनानिराकरणादेव निराक्रियते ।

स्थापयति किमत्रान्येन प्रमाणेनेति । तदेवाह । निरंशेत्यादि ।

निरंशपरिभाणूनामाभासिस्थौल्यवेदने ।
प्रत्यक्षं कल्पनायुक्तं प्रत्यक्षेणैव सिद्ध्यति ॥

ननु किमिदं स्थौल्यम्? । किं परमाण्वात्मकं किंवा परमाणुजन्यमिति? । न तावत्परमाण्वात्मकम् । तद्धि पूर्वापरादिग्भेदमुपलभ्यते । न चैकस्य परमाणोरसावस्ति । बहूनां भविष्यतीति चेत् । नैतदस्ति । न हि निरंशनयोः कश्चित् परमाणुःपूर्वः कश्चित्पश्चिमः उत्तरो दक्षिणो वा संभवति । तथाहि—यस्यावधिरूपस्यांशस्य प्रत्यासन्नः एकः परमाणुः पूर्वो दृष्टस्तस्यैवावधिरूपस्यापरोऽपि प्रत्यासन्नः । ततस्तद्वधिरूपया प्रत्यासत्त्या यद्येकः पूर्वः अपरोऽपि पूर्वः स्यात् । एवं शेषेष्वपि वाच्यम् । तन्न परमाण्वात्मकं स्थौल्यमिति । नापि परमाणुजन्यम् । यतः परमाणुभिः किं संयुक्तैरुतासंयुक्तैरिति? तत्र यदि संयुक्तैस्तदा पिंडः स्यादणुमात्रकः । तथाहि—परमाण्वन्तरेण संयोगः किमेकदेशेन किं वा सर्वात्मनेति? । तत्र न तावत् प्रथमपक्षः । अनिर्देशत्वात्परमाणूनाम् । द्वितीयपक्षे तु सर्वपरमाणूनामेकस्मिन् परमाणौ प्रवेशः स्यादिति । अथासंयुक्तायोग्यदेशव्यवस्थिताः स्थौल्यं जनयन्ति, प्रतिभासं जनयन्ति । तत्र साधकस्याप्रतिपादनाद्दूरं प्रतिभासधर्मः । अस्ति हि कश्चिद्दूर्नो नीलत्वादिलक्षणः कश्चित्प्रतिभासधर्मः यो बहुषु प्रतिभासमानेषु प्रतिभाति । यथा केशकलापइति । तस्माच्च स्थौल्यं वस्तु यत्त्वावयवं प्रतिप्रतीयेतेति । एतदेवाह । नासंयुक्तैरित्यादि ।

नासंयुक्तैर्न संयुक्तैर्निरंशो क्रियते महत् ।
अयोगे प्रतिभासोऽपि संयोगेऽप्यणुमात्रकम् ॥

ततो न तावद्द्रव्यादिकं किंचिदस्ति । भवतु वा तथापि घटपटवदप्रभासमानं न स्वग्राहिणि कल्पनात्वमारोपयति । पारतन्त्र्येण प्रतिभासमानं कथं नेति चेत् । किमिदंपारतन्त्र्यम् ? । विशेषणविशेष्यभाव इति चेत् । नैतदस्ति । न हि वास्या नीलादिवद्विशेषणादि किञ्चिदस्ति । विशेष्यस्यापि विशेषणत्वेन दर्शनात् । किं विशेषणविशेष्ययोः किमेकज्ञानावभासित्वमुतानेकज्ञानावभासित्वमिति ?। तत्रैकज्ञानावभासित्वेन ज्ञायते किञ्चिद्विशेषणं किञ्चिद्विशेष्यमिति । न ह्यनयोरूपरिनामास्ति । प्रधानोपसर्जनत्वमिति चेत् । किमिदं प्राधान्यादि ?। उपकार्योपकारकत्वमिति चेत् । न, जन्यजनकभावादन्य उपकार्यादिभावः । न च कार्यकारणभावः समानकालयोरिति । आधाराधेयभाव इति चेत् । न, तस्य पूर्वमेव निषेधात् । न ह्युपर्यभावेन स्थितपदार्थद्वयव्यतिरिक्तः कश्चिदाधाराधेयभावः । न च तथा प्रतिभासे किञ्चित्पारतन्त्र्यमिति । भिन्नज्ञानावभासित्वे का नाम कल्पना ? । अथ भिन्नदर्शनेन विशेषणविशेष्येऽनुभूय पश्चात्स्मरणं तयोस्तद्भावे प्रत्येति तदेनदिष्यत एव । शब्दोल्लेखिज्ञानं वस्तु योजयति न तु तथा वस्तुरूपमिति । अथशब्दयोजितं वस्तु भविष्यतीति । तन्न । नह्यर्थे शब्दाः सन्ति तदात्मानो वेत्याशङ्क्याह—। न तु शब्दार्थयोजनादिति । शब्दस्यार्थस्य तयोर्योजना न संभवति । तत्र ह्यनवस्थां प्रतिपादयन्तीति । तथाहि—नास्मृतेन वाचकशब्देनार्थो योज्यते शब्दस्यापि स्मरणं तद्वाचकशब्दस्मृतेः, तस्यापि स्ववाचकशब्दस्मृतेरित्यनवस्था । न च कल्पनाज्ञानकारणेऽध्यक्षेति वाच्यम् । आकारवादे प्रतिषेधात् । तस्माद्वस्त्वेव स्थूलं साक्षयमननुभूयमानं केवलानामणूनामननुभवात् प्रत्यक्षं कल्पनायुक्तम्

स्थापयति किमत्रान्येन प्रमाणेनेति । तदेवाह । निरंशेत्यादि ।

निरंशपरिमाणूनामाभासि स्थौल्यवेदने ।
प्रत्यक्षं कल्पनायुक्तं प्रत्यक्षेणैव सिद्ध्यति ॥

ननु किमिदं स्थौल्यम्? । किं परमाण्वात्मकं किंवा परमाणुजन्यमिति? । न तावत्परमाण्वात्मकम् । तद्धि पूर्वापरादिग्भेदमुपलभ्यते । न चैकस्य परमाणोरस्यावस्ति । बहूनां भविष्यतीति चेत् । नैतदस्ति । न हि निरंशमणोः कश्चित् परमाणुःपूर्वः कश्चित्पश्चिमः उत्तरो दक्षिणो वा संभवति । तथाहि—यस्यावधिरूपस्यांशस्य प्रत्यासन्नः एकः परमाणुः पूर्वो दृष्टस्तस्यैवावधिरूपस्यापरोऽपि प्रत्यासन्नः । ततस्तदवधिरूपया प्रत्यासत्त्या यद्येकः पूर्वः अपरोऽपि पूर्वः स्यात् । एवं शेषेष्वपि वाच्यम् । तन्न परमाण्वात्मकं स्थौल्यमिति । नापि परमाणुजन्यम् । यतः परमाणुभिः किं संयुक्तैरुतासंयुक्तैरिति? तत्र यदि संयुक्तैस्तदा पिंडः स्यादणुमात्रकः । तथाहि—परमाण्वन्तरेण संयोगः किमेकदेशेन किं वा सर्वात्मनेति? । तत्र न तावत् प्रथमपक्षः । अनिर्देशत्वात्परमाणूनाम् । द्वितीयपक्षे तु सर्वपरमाणूनामेकस्मिन् परमाणौ प्रवेशः स्यादिति । अथासंयुक्तायोग्यदेशव्यवस्थिताः स्थौल्यं जनयन्ति, प्रतिभासं जनयन्ति । तत्र साधकस्याप्रतिपादनाद्दूरं प्रतिभासधर्मः । अस्ति हि कश्चिद्धर्मो नीलत्वादिलक्षणः कश्चित्प्रतिभासधर्मः यो बहुषु प्रतिभासमानेषु प्रतिभाति । यथा केशकलापवदिति । तस्मान्न स्थौल्यं वस्तु यत्सावयवं प्रतिप्रतीयेतेति । एतदेवाह । नासंयुक्तैरित्यादि ।

नासंयुक्तैर्न संयुक्तैर्निरंशो क्रियते महत् ।
अयोगे प्रतिभासोऽपि संयोगेऽप्यणुमात्रकम् ॥

कोऽयं प्रतिभासधर्मः? । किं वस्तु किं वाऽवस्तु? । यदि वस्तु तदाऽवयविदूषणम् । अथावस्तु तदा कथं न भ्रान्तिः? । प्रत्यक्षं प्रथमावभासि । नैतदस्ति । यतो न किंचित्स्थौल्यं परमाणुभ्योऽन्यत् किन्तु विततदेशाः परमाणवस्तथा प्रतिभासन्त इति । कथं नान्तरावभास इति चेत् । किमिदमन्तरम्? । किमाकाशं किं वा विजातीयाणवः, किं वा रूपभेदो, देशभेदो, वेति? । तत्राकाशविजातीयपरमाणुप्रतिभासाभावो न दोषाय । नहि रूपपरमाणुप्रतिभासस्वरूपोऽतीन्द्रियाकाशप्रतिभासो वा दोषमावहति । भिन्नरूपता तु प्रतिभासत एव । अन्यथा परमाणुमात्रप्रतिभासः स्यात् । देशोऽपि न स्वरूपादन्यः सोऽपि स्वरूपेणैवापाकृतः । अन्यथा भिन्नस्वरूपपरमाणुप्रतिभासे न किंचित्प्रतिभासेत । अस्थूलं जगत् स्यादित्येतदेवाह । भिन्नदेशस्वरूपाणामित्यादि ।

भिन्नदेशस्वरूपाणामणूनां संग्रहे सति ।
तत्स्थौल्यं यदि कल्पेत नाभासेत न किञ्चन ॥

किं स्थौल्यमात्रं प्रतिभाति किं वा स्थौल्यविशेष इति? । तत्र यदि स्थौल्यमात्रं तदा नीलार्थी पीतेऽपि प्रवर्तेत । यद्वा न कुत्रचिदपि, विशेषानवधारणात् । अथ विशेषः स नीलपरमाणुप्रतिभासे सति नीलस्थौल्यं न पीतस्थौल्यमिति प्रतिभासेत् । तथा सति नीलपरमाणूनां प्रतिभासनताभ्युपगमे तेषां स्थौल्यमपि न प्रतिभासेत । नचैवम् । अतः परमाणव एव भिन्नदेशाः प्रतिभासमानाः किंचिदपि प्रत्यक्षं कल्पनात्मकादृष्टत्वाग्राह्यं नेष्यतेति ।

नैरन्तर्ये यतो नास्ति स्थौल्यमन्तरान्ततः ।

भिन्नमस्ति समानं तु रूपमंशेन केनचित् ॥

यत्प्रत्यपादि परमाणवः प्रतिभान्तीति एतन्नास्ति । न हि शपथशतैरपि निरंशाः परमाणवः प्रत्यक्षे सति भान्तीति कश्चित् प्रत्येति । तदभावादनुमानमपि यत्स्थूलं तत्सूक्ष्मपूर्वकमिति न तत्संसाधयति । नापि स्थौल्यं परमाणुभ्यो भिन्नम् । न हि परमाणवो भिन्नाः । स्थौल्यं भिन्नं किंचिद्‌भाति । एतदेवाहयत इत्यादि । किं तर्हि अस्तीत्याह—अस्तीत्यादि । समानमित्येकपरिणामपरिणतं रूपमिति । द्रव्यमिति । न तु तस्यामवस्थायां केचिदणवः सन्ति । नन्वेवं द्रव्यमेव स्यादित्याशङ्क्याह—। केन चिदिति । एतदुक्तं भवति तत्कथं न प्रत्यक्षं सविकल्पमिति । पुनरपि विशेषमभिधातुं परमाशङ्कते । अथास्त्वित्यादि ।

अथास्तु युगपद्भासो द्रव्यपर्याययोःस्फुटः ।
तथापि कल्पना नैषा शब्दोल्लेखविवर्जिता ॥

उक्तमेतत् । घटपटवदेकज्ञानोपलम्भोऽस्त्वेवेऽपि शब्दोल्लेखरहिता नेयं कल्पनेति । उक्तमेतन्न पुनर्युक्तमित्याह—चकास्ति इत्यादि ।

चकास्ति योजितं यत्र सोपाधिकमनेकधा ।
वस्तुतत्कल्पनाज्ञानं निरंशाप्रतिभासने ॥

यत्र ज्ञाने योजितं वस्तु प्रतिभाति । कथं यो[illegible]त्या-ह—। सोपाधिकमिति । बहुउपाधिना वर्तते यो[illegible] । ननु विशेषणविशेष्यभावस्य निराकरणात्कथमे[illegible] अनेकधेति । वक्तुरयत्वादिना । न ह्यनुभवा[illegible] [illegible] निर-क्रियते तज्ज्ञानं सविकल्पकम् । [illegible] [illegible]—। निर[illegible]

प्रतिभासत इति । निरंशस्य परमाणोरप्रतिभासने प्रतीत्यर्थः । तस्मात्प्रथमाक्षसंनिपात एव दीर्घह्रस्ववर्तुलादिवस्तुप्रत्यक्षे प्रतिभातीति तेन तत्सविकल्पकमिति स्थितम् । एवं तिर्यक्सामान्यमवस्थाप्येदानीमूर्ध्वतासामान्यमवस्थापयितुमाह—। भेदज्ञानादित्यादि ।

भेदज्ञानात्प्रतीयन्ते यथा भेदाः परिस्फुटम् ।
तथैवाभेदविज्ञानादभेदस्य व्यवस्थितिः ॥

तथाहि—यद्यथा प्रतिभाति तत्तथा सद्व्यवहृतिमवतरति । यथा कुवलयं नीलरूपतया विराजते तेनैव रूपेणास्ति । क्षणपरिगतेनैव च रूपेण सकलाः पदार्थमात्राः प्रतिभान्ति । न पूर्वापरकालपरिगतेनात्मनेति स्वभावाहेतुः प्रत्यक्षसिद्धे व्यवहारप्रवर्त्तनफल इति । तथा यत्सत्तत्सर्वं क्षणिकमित्यादयः भेदज्ञानाद्यथा भेदपर्यायाः क्षणिकाः प्रतीयन्ते तथाऽभेदज्ञानादनुगताकारादभेदस्य द्रव्यस्य व्यवस्थितिरिति । अथेदमनुगतं ज्ञानं निर्विषयत्वादप्रमाणम् । तथाहि—

किं दृष्टे प्रत्यभिज्ञानमुतस्विन्मध्यवर्त्तिनि ।
किंवा दृष्टिपथं प्राप्ते प्रमाणं वस्तुनीष्यते ॥
तत्र पूर्वोत्तराध्यक्षे क्षये पूर्वोत्तरग्रहे क्षमे ।
मध्येनेन्द्रियवृत्तिः स्यात्कथं तत्र प्रवर्त्तते ॥
न चावस्थात्रयव्यापि किञ्चिदेकं प्रतीयते ।
प्रत्यक्षेण तथाभावे जन्ममृत्युगतिर्भवेत् ॥
किञ्च किं दृष्टतां वेत्ति किं वा कालादियोगिताम् ।
दृष्टत्वं दृश्यमानत्वं किमेतेन प्रपद्यते ॥
किं वा भेदेन पूर्वस्मिन्स इत्ययमिति ।
पास्यात्सोऽयंनेति मतिर्भवेत् ॥

द्वितीयेऽपि यदा सोऽयं द्वयं भाति विरोधवत्।
सामानाधिकरण्यं हि विरुद्धज्ञानयोः कुतः॥
अथ प्रत्ययभेदेऽपि प्रतिभास्यं न भिद्यते।
स्वतन्त्रं प्रतिभास्यं स्यात् ज्ञानमात्रं तदा भवेत्॥
अथाक्रद्यतया भाति यदा वस्तु पुरःस्थितम्।
तदैकत्वग्रहोऽध्यक्षे कथं नास्ति विपश्चिताम्॥
अत्र यद्रूपता केयं किं पूर्वस्य प्रकाशनम्।
किंवा तत्तुल्यरूपस्य यदि वा सान्तराग्रहः॥
तत्र पूर्वग्रहे न स्याद्वर्त्तमानग्रहः सदा।
पूर्वपूर्वग्रहे वा स्यात् जन्मादिप्रतिभासनम्॥
यदि तत्तुल्यता भाति भिन्नमेव प्रसाध्यति।
अन्तराग्रहणं त्वाशुकारित्वादुत्सुकेन किम्॥
पूर्वकालादियोगित्वे यद्यध्यक्षं न युक्तिमत्।
पूर्वकालाद्यभावे हि तद्विशिष्टग्रहः कथम्॥
भावे तु पूर्वकालादेर्वर्तमानत्वमापतेत्।
यथा च न नित्यत्वं स्याद्वर्तमानग्रहे सति॥
अथ स्मृत्युपनीतेन न तस्य विशेषणम्।
स्मरणेनोपनीतं हि न वस्त्वध्यक्षगोचरः।
न हि नीलोत्पलं घ्राणं गन्धे स्मृत्युपढौकते॥
वर्त्तते जानुचित् तस्मान्न तत्कालविशिष्टता।
सविकल्पकमध्यक्षं प्रत्यभिज्ञा न चेद्भवेत्॥
अक्षान्वियमतो न स्यादिति चेत्तन्न युक्तिमत्।
पूर्वकालविशिष्टेन सदृशेऽर्थे ऽवलोकिते॥
सहचारितया घ्राणं स्मार्तं चन्दनगन्धवत्।
तथाहि चान्दने गन्धे रूपेण सहचारिणि॥

रूपदृष्टेः स्मृतिर्यद्वत्तद्वत्पूर्वविशेषणे ।
दृश्यमानार्थतुल्येन वस्तुना सहचारि यत् ॥
पूर्वकालादितत्स्मृतं वर्त्तमानविशेषणम् ।
तत्स्थितं स्मरणाध्यक्षात्कल्पनाज्ञानमीदृशम् ॥
यत्स एवायमित्यस्य नापूर्वार्थग्रहस्थितिः ।
निश्चितत्वं दृढत्वं वा सविकल्पकतापि या ॥
दृढत्वमप्यनाशित्वं किं वा बाध्यत्वमुच्यते ।
सर्वासां क्षणिकत्वेन नानाशित्वं हि संविदाम् ॥
अबाध्यतापि नैवास्ति यस्मादग्रे गदिष्यते ॥
अनुमानादृते नान्यत्कल्पनाज्ञानमिष्यते ।
प्रमाणं प्रत्यभिज्ञाया नच लिङ्गमिहास्तिवः ॥
प्रत्यभिज्ञायमानत्वे यदि लिङ्गमतोच्यते ।
तस्याप्यध्यक्षतो व्याप्तिर्नैकत्वेन सह क्वचित् ॥
यद्यनुमानतो व्याप्तिरनवस्था पतेत्तव ।
न ताभ्यां मानमस्त्यन्यत् यस्माद्व्याप्तिग्रहो भवेत् ॥
कल्पनापोढमध्यक्षं निर्विकल्पकसिद्धितः ।
स्रातठ्यं प्रत्यभिज्ञातो नाध्यक्षं कल्पना युता ॥
नाक्रमात् क्रमिणाभावो नाप्यपेक्षाविशेषणः ।
क्रमोद्भवा सती सा तु स्वयमेकत्वबाधिका ॥
तेनाबाध्यत्वमप्यस्या नानुमानाच्च बाधनात् ॥
न वानयापि बाध्यत्वादनुमानमबाधकम् ।
अप्रमाण्येन युक्तायाः कुतो बाधकता स्थितिः ॥
अप्रामाण्याच्च नैवास्याः अनुमानं प्रमेष्यते ।
अन्योन्याश्रयदोषोऽपि तेन नास्ति विपश्चिताम् ॥
स्वसाध्यप्रतिबन्धाद्धि प्रमाणमनुमेष्यते ।

क्रमाक्रमक्रियाभावाद् बाधकात्प्रतिबन्धवित् ॥
बाधकं साध्यनाकार्यंलिङ्गमालिङ्ग्य वारयेत् ।
निरुछ्वासतया हन्त भावानां दुःखमापतेत् ॥
तद्बाध्यानु भावाध्याप्रत्यभिज्ञान वाक्षजम् ।
अनुमानेन नो बाध्यमिति बाध्यं विपश्चिता ॥
सूर्य्यादिवस्तुनोऽध्यक्षमनुमानेन बाधितम् ।
अर्थस्यासंभवे भावान्न विशेषो द्वयोरपि ॥

बीजत्वाच्छालिबाजं च यथांकुरं यथाऽनुमानं बाध्यतेऽध्यक्षात् । प्रत्यभिज्ञापिते तथाध्यजनकत्वं यदन्त्यस्य इत्यस्य यदा नयेत् ॥

एकत्वात्प्रत्यभिज्ञानमदात्त्वऽध्यक्षबाधितम् ।
तदेवं प्रत्यभिज्ञायाःन बाध्यत्वमिह स्तिवः ॥
कारणदुष्टता याऽस्याःख्यातेरिव कुतो भवेत् ।
नचैतस्याः प्रमाणत्वादन्योन्याश्रयदोषतः ॥
प्रत्यक्षतोऽपि नाक्षाणामप्रत्यक्षाणामदुष्टता ।
तस्याःप्रत्यक्षता या स्यात् प्रतिबन्धस्य हानितः ।
अनुमानत्वेऽपि नैवास्याः । कारणस्य विशुद्धता ॥
तदेवं प्रत्यभिज्ञायाः न प्रामाण्यमिति स्थितम् ।

अत्रोच्यते । किमिदमिन्द्रियान्वयव्यतिरेकानुविधायि स्थिरतरवस्तुग्राहि प्रत्यक्षं नानुभूयते, किं वानुभूयमानमपि निशीथिनीनाथद्वयावलंबि प्रत्यक्षवद्भ्रान्तमिति ? । तत्रानुभूयत इति प्रवादो ऽनुभवेनैव निराक्रियते । द्वितीयेऽपि किं कदाचित् कुमुदिनीनाथैकग्राहि प्रत्यक्षवत्कस्यचित्क्षणिकग्राहि प्रत्यक्षमुत्पन्नं येनैतद्भ्रान्तं स्यादिति । यद्वानुमानं क्षणिकत्वग्राहि तत्प्रत्यक्षं बाधितत्वादश्रावणशब्दवृत्त्यनुमानवद्प्रमाणत्वा

रूपदृष्टेः स्मृतिर्यद्वत्तद्वत्पूर्वविशेषणे ।
दृश्यमानार्थतुल्येन वस्तुना सहचारि यत् ॥
पूर्वकालादितत्स्मृतं वर्त्तमानविशेषणम् ।
तत्स्थितं स्मरणाध्यक्षात्कल्पनाज्ञानमीदृशम् ॥
यतस एवायमित्यस्य नापूर्वार्थग्रहस्थितिः ।
निश्चितत्वं दृढत्वं वा सविकल्पकतापि या ॥
दृढत्वमप्यनाशित्वं किं वा बाध्यत्वमुच्यते ।
सर्वासां क्षणिकत्वेन नानाशित्वं हि संविदाम् ॥
अबाध्यतापि नैवास्ति यस्मादग्रे गदिष्यते ॥
अनुमानादृते नान्यत्कल्पनाज्ञानमिष्यते ।
प्रमाणं प्रत्यभिज्ञाया नच लिङ्गमिहास्तिवः ॥
प्रत्यभिज्ञायमानत्वे यदि लिङ्गमतोच्यते ।
तस्याप्यध्यक्षतो व्याप्तिर्नैकत्वेन सह क्वचित् ॥
यद्यनुमानतो व्याप्तिरनवस्था पतेत्तव ।
न ताभ्यां मानमस्त्यन्यत् यस्माद्व्याप्तिग्रहो भवेत् ॥
कल्पनापोढमध्यक्षं निर्विकल्पकसिद्धितः ।
ज्ञातव्यं प्रत्यभिज्ञातो नाध्यक्षं कल्पना युता ॥
नाक्रमात् क्रमिणाभावो नाप्यपेक्षाविशेषणः ।
क्रमोद्भवा सती सा तु स्वयमेकत्वबाधिका ॥
तेनाबाध्यत्वमप्यस्या नानुमानाच्च बाधनात् ॥
न वानयापि बाध्यत्वादनुमानसबाधकम् ।
अप्रमाण्येन युक्तायाः कुतो बाधकता स्थितिः ॥
अप्रामाण्याच्च नैवास्याः अनुमानं प्रमेष्यते ।
अन्योन्याश्रयदोषोऽपि तेन नास्ति विपश्चिताम् ॥
स्वसाध्यप्रतिबन्धाद्धि प्रमाणमनुमेष्यते ।

क्रमाक्रमक्रियाभावाद् बाधकात्प्रतिबन्धवित् ॥
बाधकं साध्यनाकार्यं लिङ्गमालिङ्ग्य वारयेत् ।
निरुछ्वासतया हन्त भावानां दुः खमापतेत् ॥
तदबाध्यानुमाबाध्याप्रत्यभिज्ञान वाक्षजम् ।
अनुमानेन नो बाध्यमिति वाच्यं विपश्चिता ॥
सूर्य्यादिवस्तुनोऽध्यक्षमनुमानेन बाधितम् ।
अर्थस्यासंभवे भावान्न विशेषो द्वयोरपि ॥

बीजत्वाच्छालिबीजं च यबांकुरं यथाऽनुमानं बाध्यतेऽध्यक्षात् । प्रत्यभिज्ञापिते तथाप्यजनकत्वं यदन्त्यस्य क्षणस्य यदा नयेत् ॥

एकत्वात्प्रत्यभिज्ञानमदास्त्वध्यक्षबाधितम् ।
तदेवं प्रत्यभिज्ञायाःन बाध्यत्वमिह स्थितः ॥
कारणदुष्टता याऽस्याःख्यातेरिव कुतो भवेत् ।
नचैतस्याः प्रमाणत्वादन्योन्याश्रयदोषतः ॥
प्रत्यक्षतोऽपि नाक्षाणामत्यक्षाणामदुष्टता ।
तस्याःप्रत्यक्षता या स्यात् प्रतिबन्धस्य हानितः ।
अनुमानत्वेऽपि नैवास्याः । कारणस्य विशुद्धता ॥
तदेवं प्रत्यभिज्ञायाः न प्रामाण्यमिति स्थितम् ।

अत्रोच्यते । किमिदमिन्द्रियान्वयव्यतिरेकानुविधायि स्थिरतरवस्तुग्राहि प्रत्यक्षं नानुभूयते, किं वानुभूयमानमपि निशीथिनीनाथद्वयावलंबि प्रत्यक्षवद्भ्रान्तमिति ?। तत्रानुभूयत इति ब्रुवाणो ऽनुभवेनैव निराक्रियते । द्वितीयेऽपि किं कदाचित् कुमुदिनीनाथैकग्राहि प्रत्यक्षवत्क्षणिकत्वग्राहि प्रत्यक्षमुत्पन्नं येनैतद्भ्रान्तं स्यादिति। यच्चानुमानं क्षणिकत्वग्राहि तत्प्रत्यक्षे बाधितत्वादश्रावणशब्दइत्यनुमानवदप्रमाणस्था-

दबाधकमिति । किंच सत्वादेर्लिङ्गस्य व्याप्तिग्रहणं न प्रत्यक्षेण । परोक्षत्वात् क्षणिकत्वस्य । अनुमानेन ग्रहणेऽनस्था, इतरेतराश्रयत्वं च प्रतिपादयुक्तमिति । अथ सत्वमर्थक्रियाकारित्वेन व्याप्तमर्थक्रियाकारित्वं च क्रमयौगपद्येनेति । तयोश्च व्याप्तिः प्रत्यक्षेणैव प्रतीयतइति नानवस्थेति । तथाहि—। क्रमेणाङ्कुरादिकं कार्यमुत्पाद्यमानमुपलभ्यते तदभावो यौगपद्येन । उभयनिषेधे केवलभूतलग्राहि प्रत्यक्षं प्रकारान्तराभावं निश्चापयति तेन क्रमयौगपद्याभ्यामर्थक्रियाकारित्वस्य व्याप्तिः प्रतिपद्यत इति । न ते नित्यात् क्रमयौगपद्यं निवर्त्तमानमर्थक्रियाकारित्वलक्षणं सत्वमादाय निवर्त्तमानं क्षणिकेष्वेवावतिष्ठत इति व्याप्तिग्रहणं प्रत्यक्षमूलमिति । भवत्वेकान्तनित्यात् क्रमयौगपद्यनिवृत्तिनिबन्धनार्थक्रियाव्यावृत्तिस्तथा न सा क्षणिकेष्वेवावतिष्ठते । यथैकान्तनित्येऽर्थक्रिया न संभवति तथैकान्तक्षणिकेष्वपीति । एतच्च पश्चात्प्रतिपादयिष्यते । तन्न गृहीतव्याप्तिकं क्षणिकानुमानं प्रत्यभिज्ञाबाधकमिति । प्रतिपादयिष्यते च प्रत्यभिज्ञायाः प्रमाण्यमिति । तस्मादनुगतव्यावृत्ताकाराबुद्ध्यात्मकं वस्तु व्यवस्थापयति । एतदेवाह—। घटमौलिसुवर्णेष्विति ।

घटमौलिसुवर्णेषु बुद्धिर्भेदावभासिना ।
संविन्निष्ठा हि भावानां स्थितिःकात्र विरुद्धता ॥

भेदावभासिनेति । भेदमनुगतव्यावृत्तरूपमवभासितुं शीलं यस्याः सा तया । तथाहि—सुवर्णमिति अनुगताकारा बुद्धिः, घटश्च मुकुटश्चेति व्यावृत्ताकारा चानुभूयतइति । न चैतद्वाच्यं विरोधादेकं वस्तु नोभयरूपमिति । यत आह । संविन्निष्ठा हीति । यस्मादन्यत्रापि नीलपीतव्यवस्था संवेदननिबन्धनैव

तदिहापि विरोधेऽपि संवेदनमेव प्रमाणमिति । एवं प्रत्यक्षतो भयात्मकं वस्तु अनुभूयमानमपि यो मोहान्न प्रतिपद्यते तं प्रत्यनुमानमुपन्यस्यते । सत्वाद्यथानुपपत्तेः सर्वं नित्यानित्यात्मकम् । यथा घटे एकान्तनित्येऽनित्यार्थक्रियाविरोधात् । सन्ति च सप्तपदार्थाः । न तावद्विशदतरदर्शनावशे यस्य सत्त्वस्य ज्ञानवादिमताश्रयणेनासिद्धत्वमुद्भावनीयम् । विज्ञानस्याप्यभावप्रसक्तेः । नापि सर्वशून्यवादिमताश्रयणेन । वादे तस्यानधिकारात् । सर्वाभावे हि कस्मै किं केन प्रतिपादयेदित्यादेरुक्तत्वात् । नापि प्रतिज्ञार्थैकदेशत्वेनासिद्धत्वम् । धर्मभेदस्याभ्युपगमात् । नापि विकल्पविकल्पतो धर्मभेदः । तदा हि खरतुरगविषाणयोरपि गम्यगमकभावः स्यात् । कल्पिताच्च हेतोः कल्पितसाध्यप्रसक्तेः । नाप्येकान्तेन भेदः । संबन्धासिद्धेः । समवायादिसंबन्धस्य निरासात् । न चात्र भेदाभेदमवज्ञाविदोषः । गुडनागरसंज्ञितवस्त्वभ्युपगमात् । तदुक्तम् ।

> गुडश्चेत्कफहेतुः स्यात् नागरं पित्तकारणम् ।
> तन्नूलमन्यदेवेदं गुडनागरसंज्ञितम् ॥
> मधुरं नहि सर्वं स्यात् कफहेतुर्यथा मधु ।
> तीक्ष्णं वा पित्तजनकं यथा मारीचिका मता ।

तदेवं भिन्नाभिन्ने वस्तुनि नासिद्धो हेतुः । नापि विरुद्धः । सपक्षे सद्भावात् । नापि विरोधाक्रान्तत्वान्नित्यानित्यात्मत्वं घटस्यासिद्धमिति वाच्यम् । तथाप्रतिभासनात् । संविन्निष्ठा हि विषयव्यवस्थितयः । तथा च छायातपयोरपि यद्येकत्राभासनं स्याद्विरोधेऽपि केन नानुमन्येत तथावस्थानम् । तथाहि—मृद्रूपस्य प्रौयसंघितस्य सर्वावस्थानुयायिनो नित्यस्यानित्यत्वेनोत्पादव्ययसंज्ञितेनैकात्मतया प्रतीतेः । अन्यथैकान्तभेदे मृत्सं-

स्थानयोरपरस्परात्मतया प्रतिभासनं स्यात् । नाप्येकान्तेनैकत्वम् । अनुगतव्यावृत्तेन द्विरूपाया बुद्धेरुत्पादात् । तदुक्तम् ।

घटमौलिसुवर्णार्थिना सोत्पादस्थितिष्वयम् ।
शोकप्रमोदमाध्यस्थं जनो याति सहेतुकम् ॥

न चात्रानुगताकारा बुद्धिः सविकल्पकत्वादप्रमाणमिति वाच्यम् । व्यवसायरूपत्वात्प्रमाणस्येत्युक्तत्वात् । तदेव देशकालस्वभावाभेदेऽपि संख्यासंज्ञालक्षणकार्यभेदान्तरसिंहाकारमेव वस्तु । तदुक्तम् ।

नरसिंहं नररूपत्वान्न सिंहो नररूपतः ।
संज्ञाविज्ञानकार्याणां भेदाज्जात्यन्तरं हितम् ॥
नान्वयो भेदरूपत्वान्न भेदान्वयरूपतः ।
मृद्भेदद्वयसंसर्गवृत्तिर्जात्यन्तरं घटः ।

अन्यथैकान्तकूटस्थो न कश्चित् क्वचित्प्रवर्तेत इत्यप्रवृत्तिनिवृत्तिकं जगत् स्यात् । अन्यथा परिणामित्वमेव स्यात् । एकान्तक्षणिकत्वेऽपि प्रतिसन्धानप्रत्यभिज्ञाद्यभावेन स्वगृहेऽप्यागमनं न स्यात् । तस्मादनेकान्तात्मन्येव वस्तुनि व्यवहारोऽपि घटते । तदेवमुभयात्मकं वस्तु सिद्धम् । ननूक्तं विरोधाक्रान्तत्वात्कथमेतदिति ? । सत्यमुक्तं किंत्वयुक्तम् । तथाहि–। विरोधो द्विधा सहानवस्थानलक्षणः, परस्परपरिहारलक्षणश्च व्यावर्ण्यते तत्र किं ययोर्न कदाचिदेकत्रावस्थानं तयोः सहानवस्थानमुत किं यत्कालावस्थानेऽपि पश्चादनवस्थानेनेति ? । आद्ये पक्षेऽहिनकुलादीनां न विरोधः स्यात् । अन्यथा त्रैलोक्येऽप्युरगादीनामभावः स्यादिति । येन कस्यचिन्नरवनितादेर्विरोधो न स्यात् । तयोरपि कंचित्कालमेकत्र स्थित्वापगमात् । किंच वडवानलजलधिजलयोर्विद्युदम्बुदांभसोश्चिरतरमेकत्रावस्थाने

कथमयं विरोधः ? । अथ बलवता द्वितीयस्य निवर्त्तते तथाभावः । न स्वयं विश्लेषे किलाविकलकारणस्य भवतोऽन्यभावेऽभावाद्विरोधव्यवस्था । यथाशीतोष्णयोः । तदसत् । यतो बलवता किं क्षणिकस्य निवर्त्तनमुताक्षणिकस्य ? । क्षणिकस्यापि किमतीतानागतक्षणकस्य उत वर्त्तमानक्षणिकस्येति ? । तत्रातीतानागतयोरविद्यमानत्वादेव कस्य केन निवर्त्तनम् । दैवरक्ता हि किंशुकाः । एकक्षणस्थायिनः । वर्त्तमानस्य केनचिन्निवर्त्तनं वारणं वा संभवति । अथ विरोधिनाऽसामर्थ्योत्पादनेन मन्दतरतमादिकार्योत्पत्तौ त्रिचतुरेषु क्षणेषु निवर्त्तते । ननु सामर्थ्यविनाशे निर्हेतुकं विना संवादो निरर्थकः स्यात् । अथ सहकारित्वमेव सामर्थ्यविनाशनम् । ननु क्षणस्यानुपकार्यत्वात्कथमसौ सहकारी ? । एककार्यकारणादिति चेत्तर्हि कार्यकारणभावमात्रमेव स्यान्निवर्त्यनिवर्त्तकभावः । सहकारिणो विरोधव्यवस्थायां न कस्यचिदयं न स्यात् । तत्र क्षणिकस्य निवर्त्तते सहावस्थानविरोधः । अथाक्षणिकस्य तस्यापि निवृत्तिः किं भिन्ना स्यादभिन्ना वा ? । अभिन्ननिवृत्तिकरणत एव कृतः स्यात् । तथा च कारणमेव स्यान्न विरोधः । भिन्ना चेत् । तस्या एव कारणं स्यात्, न कश्चिन्निवर्त्तको नाम । किञ्च भवतु कथंचिच्छीतोष्णादीनां विरोधस्तथाऽप्ययं नित्यानित्ययोर्न सम्भवति । तथा हि-किमविकलकारणं नित्यत्वमनित्यत्वेन व्यावृत्तमुतानित्यत्वं नित्यत्वेनेति ? । न तावदाद्यः पक्षः । यतः कारणवत्त्वे नित्यत्वमेव न स्यात् । अथाविकलकारणं अविचलितस्वरूपं तस्यापि न केनचिन्निवर्त्तनं निवर्त्तने वानित्यत्वमेव न स्यात् । नापि क्षणिकत्वम् । किंच प्रतिक्षणविशरारुषु भावेषु तदेव किंचिन्नित्यत्वं नास्ति येन क्षणिकत्वं व्यावृ-

र्यते । सद्भावे वा कथं सहावस्थितिविरोध इति । अथ परस्परपरिहारस्थितिलक्षणो नित्यत्वयोर्विरोधः स हि किल स्वरूपनिष्ठो व्यावर्यते । नैकं वस्तु द्विरूपं संभवति इति । तदसत् । यत एकस्यापि प्रस्तरादेः शीतस्पर्शस्य सतः कालान्तरेणोष्णस्पर्शस्य दर्शनात् । न च तद्वस्तु भिन्नम् । विरुद्धोभयपर्यायात्मतया प्रत्यभिज्ञायमानत्वात् । अथैकविरोधोभयरूपता नोपलभ्यते । वह्नेरेकस्यापि उष्णानुष्णस्वभावस्य दर्शनात् । तथाहि स्पर्शरूपतया वह्निरुष्णो न रूपतया । अन्यथा तदवलोकने जननयनदहनमापद्येत । न च स्पर्शरूपपरमाणूनां परस्परपरिहारेणावस्थानान्नैकमुभयरूपमिति वक्तव्यम् । यस्तत्तथापरिणते वह्निद्रव्ये न केवलापरे परमाणवो विद्यन्ते । न चेन्द्रियान्तरकल्पनावैफल्यदोषो वाच्यः । कथंचिद्भेदस्याभ्युपगमात् । किंचैकस्मिन्नात्मनि विरुद्धधर्माधर्मयोरेकसंबन्धेनावस्थाने कथमयं विरोधः । अथ कर्मरूपतया तयोरेकत्वात् तथावस्थानेऽपि न युगपद्विरुद्धफलजनकत्वम् । तदप्यसत् । तस्यापि दर्शनात् । तथाहि—पादे व्रणछेदकर्मणि दुःखोत्पादेऽपि मुखे कर्पूरादिना सुखोत्पादस्यापि दर्शनात् । किंचायं नित्यानित्ययोः सामान्यलक्षणयोः सतोर्विरोधः उत सामान्यलक्षणस्वलक्षणयोः ? । अहोस्वित्स्वलक्षणयोः किमारोपितयोरथारोपितानारोपितयोरिति? । न तावदाद्यपक्षः । एकत्रैवानेकसामान्यसद्भावाभ्युपगमात् । नापि द्वितीयः । यतः ।

निर्विशेषं न सामान्यं भवच्छशविषाणवत् ।
विशेषोऽपि च नैवाऽस्ति सामान्येन विना कृतः ।

नापि तृतीयः । रूपरसादीनामेकत्र सद्भावदर्शनात् । चतुर्थे

तु खरतुरगविषाणयोरिव को नाम विरोधः । अन्यथारोपितानारोपितयोर्भावाभावयोः परस्परपरिहारस्थितलक्षणो विरोधः । तथाहि—नित्यत्वं निवृत्तिस्तुच्छरूपाऽनित्यत्वं, अनित्यत्वनिवृत्तिश्च नित्यत्वं, तयोः कथ न विरोधः । तदप्यसत् । यतो न तु च्छरूपोऽभावः प्रमाणगोचरचारीति प्रबन्धेन प्रतिपादितः कथं तर्हि भावाभावात्मकं वस्तु । नैतदस्ति । यस्मात्परदेशाद्यपेक्षया भाव एवाभावः । नापि प्रागभावप्रध्वंसाभावविशेषणसत्तासमवायात्मकः । सत्तया सह संबधाभिद्धेः । स हि समवायलक्षणोभ्युपगम्यते तस्य च पूर्वमेव निरस्तत्वादिति । किं च सत्तासमवायादनित्यतायामात्मादिष्वपिऽनित्यत्वप्रसङ्गः । यथा च समवायोऽन्यद्वाएकान्तनित्यत्वं वस्तु न संभवति । तथाग्रे प्रतिपादयिष्यामः ॥ तन्न कश्चिद्भावव्यतिरिक्तोऽभावोऽस्ति। येन विरोधः स्यात् । ततः सिद्धो नित्यानित्यात्मको घटः तत्सिद्धौ च न विरुद्धो हेतुः । नाप्यनैकान्तिकः ? । विपर्यये बाधकप्रमाणसद्भावात् । तथाहीदं सत्वमर्थक्रियाकारित्वेन व्याप्तं सा च कूटस्थनित्यादनित्याच्च व्यावर्त्तमाना सत्वमादायैव निवर्त्तते । तेनोत्पादव्ययध्रौव्यवत्येव वस्तुनि सत्वमवतिष्ठते । न च सत्तासम्बन्धेन सत्त्वं वाच्यम् । सत्तादीनामसत्त्वप्रसङ्गात् । अपरसत्ताभ्युपगमे वानवस्था । तदव्यापिलक्षणमितिव्यापि च । शशविषाणादीनामपि सत्त्वप्रसङ्गात् । तेषां सकलशक्तिरहितत्वान्न सत्तासम्बन्ध इतिचेत्तर्हि शक्तिरेव सत्त्वे लक्षणं किं सत्तासम्बन्धेन । इतरेतराश्रयत्वं च स्यात् । तथाहि-। सति सत्ता सम्बन्धे सत्त्वं, सति सत्त्वे सत्तासम्बन्धः । सा च कूटस्थस्य न विद्यते । तथाहितन्नित्यं क्रमेण वा शक्तिमत्स्यात्, यौगपद्येन वा ? । न तावत्क्रमेण सकलकालमर्थोपपत्तस्यैकक्षण एव समस्तकार्यकारणप्र-

सङ्गात् । सहकार्यपेक्षा च समर्थस्य न विद्यते । असामर्थ्ये वा पूर्वमसमर्थस्य सहकारिसंनिधौ सामर्थ्योत्पत्तौ परिणामित्वप्रसङ्गः । सहकारिणा सामर्थ्यमुत्पाद्यमानं ततो भिन्नमभिन्नं वा स्यात् ? । अभेदपक्षे कूटस्थनित्यताहानिः । भिन्नकरणे तस्मादेव कार्योत्पत्तिः स्यात्, न नित्यात् इत्यादिसौगतैरेवात्र विजृम्भितं तदिह नोच्यते विस्तरभयात् तन्न क्रमेणकर्तृत्वम् । नापि यौगपद्येन ।

प्रथम एव क्षणे कृतत्वाद्द्वितीयादिषु न किञ्चित्कर्त्तव्यमस्तीति सत्वसामर्थ्यरहितस्य व्योमोत्पलस्येवासत्वं स्यात् । पुनःकरणे वा क्रमपक्ष एव स्यात् । तत्रचोक्तो दोषः । न च कृतकरणमस्ति । तन्न यौगपद्येनापि करोति । न वापरं क्रमाक्रमरूपं प्रकारान्तरमुपेयते । अस्मन्मतानुप्रवेशप्रसङ्गात् । तन्न कूटस्थानित्यं किञ्चित्करोति । नाप्येकान्तक्षणिकम् । तदपि हि क्रमेण वा कुर्याद्यौगपद्येन वा ? । न तावत्क्रमेण । स हि देशक्रमो वा स्यात्, पिपीलिकानामिव कालक्रमो वा यत्र । नद्यादीनामिव तत्र नैकस्मिन् देशे कार्यं कृत्वा देशान्तरे क्षणिकं वस्तु करोति । तत्रैव तस्य ध्वस्तत्वात् । नाप्येकस्मिन् क्षणे कृत्वा द्वितीयेऽपि दधाति । क्षणिकत्वहानिप्रसङ्गात् । अथ कार्यक्रमः सौगतैरुपेयते किं तर्हि कार्यन्तरासाहित्यं कैवल्यमङ्कुरादेर्यौगपद्यमपि कार्यान्तरसाहित्यम् । तथाहि–लोको वदति क्रमेण यथाङ्कुरा उत्पन्ना यौगपद्येनैवेति ? । ननु कल्पनामात्रमेतत् । वस्तुनः पुनः सौगतानां द्विविधं कारणं सामग्रीलक्षणं सहकारिलक्षणं च । तत्र यदि सामग्रीलक्षणं कारणमाश्रित्य क्रमयौगपद्यमिष्यते तन्न संभवति । तत्र यौगपद्याभावात् । एकमेव हि कार्यं सामग्री जनयति नापरम् । तन्न कार्यान्तरसाहित्यलक्षणं यौगपद्यं तत्रास्ति । नापि सहकारि

कारणमभ्युपगम्य तथा भावव्यवस्था । तत्र हि यौगपद्यस्यैव सम्भवति । तथा हि-। तानि स्वं स्वमुपादेयकार्यमुपादानभावेन परस्परकार्यत्वे सहकारिभावेन जनयन्तीति कुतः क्रमः । तत्परापेक्षया कल्पित एव क्रमयौगपद्यभावः । न च निरंशं वस्तु अनेककार्यजनक संभवति । सांशताप्रसङ्गात् । न चोपादानसहकारिभावः संभवति । तथाहि-द्वितीयांशभावाभावादेकमेव जनयेत् । न चैकं अनेकमुपैपते । तन्न क्षणिकपक्षेऽपि क्रमयौगपद्यक्रियासंभवः । किं च क्षणिकं वस्तु सव्यापारं वा कार्यं कुर्यान्निर्व्यापारं वा ? । निर्व्यापारस्य करणे खपुष्पस्यापि कार्यक्रिया स्यात् । व्यापारवत्त्वे प्रथमे क्षणउत्पद्यते द्वितीये व्याप्रियत इति क्षणिकत्वहानिः । अथ प्राक्क्षणभावित्वमेव व्यापारो नापरस्तर्हि तत्क्षणभाविनां जगत्क्षणानामपि कारणत्व स्यात् । तथा च सूत्ररूपतापि घटस्य स्यात् । न चोपेयार्थिनां नियतकारिणोपादानं स्यात् । न चानन्तरक्षणविनष्टे चिरतरविनष्टे वा कश्चिद्विशेषोऽस्तीति चिरतरविनष्टमपि कुर्यात् इति मृतेन कुक्कुटेन वाशितव्यम् । ततो घटरूपतया परिणमनमेव मृत्पिण्डस्य कारणत्वं न प्राग्भावः । न चानुसन्धातारमात्मानमन्तरेण कार्यकारणभावप्रतीतिः । तथाहि-कारणविषयेण प्रत्यक्षेण कारणमेव प्रतिपन्नं कार्यं कार्यविषयेणापि कार्यमेव न कारणम् । अथ निर्विकल्पकदर्शनद्वयानन्तरमिदमस्मादुत्पन्नमित्येवमाकारं स्मरणज्ञानमुदेति तेन तथाभावग्रहः । तदप्यसत् । स्मरणं हि अनुभवानुसार्येवोत्पद्यते । न चानुभवद्वयेन कार्यकारणभावो ऽनुभूत. । येन तथास्मरणं स्यात् । आत्मनश्चाभावे कस्य तत्स्मरणं स्यात् । तन्न क्षणिकत्वेऽपि कार्यकारणभावप्रतीतिः । किं च कार्यं सदुत्पद्यते उतासत् ? । यदि

सन्निकमुत्पद्यतेऽयासन्निकं न व्योमोत्पलम् । अथ प्रागभावभावान्न व्योमोत्पलस्योत्पत्तिः । ननु प्रागभावेऽपि तस्य किमिति नास्ति । उत्तरकालमभावादितिचेत् । इतरेतराश्रयत्वम् । तथाहि—यस्योत्तरकालमुत्पत्तिस्तस्य प्रागभावो यस्य प्रागभावस्तस्योत्पत्तिरिति । तन्नैकान्तिकनित्येऽनित्ये वाऽर्थक्रियात्वमस्तीति नित्यात्मन्येवार्थक्रियाकारित्वेन सत्त्वम् । तथाहि=स एव मृत्पिण्डो घटरूपतया परिणतइति प्रतीतिः । यद्रूपं हि कारणमुपलभ्यते तद्रूपनेव कार्यमपि । तदेव द्रव्यं तेन पर्यायेण परिणमदुपलभ्यते, नात्यन्तविभिन्नमभिन्नं वा घटादि कार्यं प्रतीयते । तदुक्तम्—द्रवति गच्छति तास्तान् पर्यायानिति । द्रव्यमेवान्तरङ्गं बहिरङ्गाः पर्यायाः । ननु द्रव्यस्य कुतः सत्वसिद्धिः ? । प्रत्यभिज्ञाप्रत्यक्षादिति ब्रूमः । तथाहि । यदबाधितबोधगोचरचारि तत्सत् । यथा स्तम्भकुम्भादि अबाधितप्रत्यभिज्ञाप्रत्यक्षगोचरचारि पूर्वोत्तरपर्यायव्यापि द्रव्यम् । भेददर्शनमपि भेदवादिभिरिन्द्रियान्वयव्यतिरेकविधायितया प्रत्यक्षमुपेयतेऽ तोऽभेदाध्यवसायिन्यपि पूर्वदर्शनाहितसंस्कारप्रबोधप्रभवस्मरणसहायेन्द्रियान्वयव्यतिरेकानुविधायिनी प्रत्यभिज्ञा कथं न प्रत्यक्षम् । न चात्तं वर्तमानकालभाविनिप्रत्यासीदत्यतस्तदनुसारिणी धीस्तत्रैव प्रवर्त्तितुमुत्सहते पूर्वन्नेति वाच्यम् । एवं हि विशददर्शनावसेयास्तम्भादयोऽपि न प्रत्यक्षाः स्युः । तथाहि—अर्वाधीनावयवसंबन्धेन्द्रियजनितप्रत्यक्षावसेयमध्यपरावयवादिव्यापि स्तम्भादिद्रव्यं चार्वाधीनावयवमात्रपर्यवसितप्रत्यक्षे न स्यात् । परमाणुरूपावयवानां वाऽप्रत्यक्षत्वात् । ततः सकलप्रमाणशून्यताप्रसक्तिपद्येत । अथ विततदेशव्यवस्थिताः परमाणवः प्रतिभासविषयाः । तदसत् । सान्त-

राणां तेषामप्रतिभासनात् । संयोगात्तथाभासनमिति चेत् । न तेषां संयोगः किमेकदेशेन, सर्वात्मना वा ? । नैकदेशेन । निर्देशत्वात्परमाणूनाम् । नापि सर्वात्मना । पिण्डस्याणुमात्रत्व-प्रसङ्गात् । तन्न परमाणवः प्रतिभासविषयाः, किं त्वेकपरिणा-मपरिणतं स्तम्भादि द्रव्यं प्रतिभासगोचरचारि । यथा अर्थ-पीनावयवसम्बन्धेन्द्रियजनितप्रत्यक्षेण विभिन्नदेशव्यवस्थित-परोक्षावयवव्याप्यपि पुरोऽवस्थितवस्तु प्रतीयते, तथा वर्त्तमान पर्यायसम्बन्धेन्द्रियात्स्मृतिसहायादुत्पन्नेन प्रत्यभिज्ञाप्रत्यक्षे-णातीतदेशकालादिव्यवस्थितानेकपर्यायव्याप्येकं प्रत्यक्षमिति न कश्चिद्दोषः । न च क्षणिकानुमानबाधितत्वात्प्रत्यभिज्ञानं भ्रान्तमिति वाच्यम् । अन्यथा विशददर्शनं हिमांशुपर्वतिमानं परिच्छिन्ददुत्पद्यमानं नीलं निशीथिनीनाथबिम्बं सरसान्नीलो-त्पलवदित्यनुमानमनुमयत्र प्रमाणं स्यात् । अथास्य प्रत्यक्षबा-धितत्वान्न प्रामाण्यम् । क्षणिकानुमानस्यापि प्रत्यभिज्ञाप्रत्यक्ष-बाधायां समानम् । अथ प्रत्यभिज्ञानस्य भ्रान्तत्वात्क्षणिकानु-मानस्य प्रमाणतेतरेतराश्रयत्वम् । सति हि प्रत्यभिज्ञानस्य भ्रान्तत्वेऽस्य प्रामाण्यं, सत्यस्य प्रामाण्ये प्रत्यभिज्ञाया भ्रान्ततेति । न च प्रत्यक्षमनुमानेन बाध्यते । तत्पूर्वकत्वादनुमानस्य । अन्यथानु-मानपूर्वकत्वेऽनवस्था स्यात् । ततः [illegible] प्रत्यभिज्ञा प्रत्यक्षम् । किञ्च यदि [illegible] मातीतादिपर्यायात्मकद्रव्यग्राहि [illegible] नुमानं तदपि न स्यात् । [illegible]

प्रत्यक्षं व्याप्तिग्राहकमशेषविशेषात्मकतिर्यक्सामान्यग्राहि तथा प्रत्यभिज्ञाप्रत्यक्षं ऊर्ध्वतासामान्यग्राहीति । न च लूनपुनर्जातकेशादिषु एकत्वमतरेणाप्यनुमानं भ्रान्तमिति वाच्यम् । तत्रापि सामान्यस्य सत्त्वात् । न चैकभ्रान्तं प्रत्यक्षं सर्वत्र भ्रान्तमिति वाच्यम् । तस्मात्सिद्धं नित्यानित्यात्मकं वस्तु । तत्सिद्धौ च सदसदात्मकं सामान्यविशेषात्मकं तुल्पादिव्यतप्रोठ्यात्मकं च सिद्धम् । विशेषोत्पादविनाशानामनित्यत्वेऽन्तर्भावात् । अन्येषां नित्यत्व इति । न चैतद्वाच्यम् । सर्वस्योभयरूपत्वे तद्विशेषनिराकृतेः । चोदितो दधि खादेति । किमुष्ट्रेनाभिधावति । पर्यायनयस्याप्यभ्युगमनात् । अत एव सप्तभङ्गी सिद्धति । तथाहि—यदा द्रव्यस्य प्रधानविवक्षा तदा स्यादस्तीति कथ्यते । यदा पर्यायाणां तदा स्यान्नास्तीति । यदा युगपदुभयप्राधान्यप्रतिपादनविवक्षा तदाऽवक्तव्यम् । एते सकलदिशात्मसंयोगे एव । अपरे चत्वारो भङ्गा भवन्ति । ते च स्वावयवविवक्षाविकलदिशाः । तद्यथा – अस्ति च नास्ति च । अस्ति चावक्तव्यं नास्ति चावक्तव्यं च । अस्ति च नास्तिचावक्तव्यं चेति नापरभङ्गसंभवः । एवं संख्यालक्षणगोचरविप्रतिपत्तिं निराकृत्येदानीं फलविप्रतिपत्तिं निराकुर्वन्नाह—प्रतीतेस्तु फलमिति ।

प्रतीतेस्तु फलं नान्यत्प्रमाणं न ततः परम् ।
अतद्रूपेऽपि योग्यत्वान्नियतार्थस्य वेदकम् ॥

तु पुनरर्थे । फलं पुनः प्रमाणस्यार्थाधिगतिरेव नान्यदिति । तद्विज्ञानान्तरं वा स्यात्प्रवृत्तिर्वा अर्थक्रियाप्राप्तिर्वेति ? । तत्र न तावज्ज्ञानान्तरप्रमाणान्तरम् । तद्धि प्रमाण-

न्निन्नविषयं वा स्यादभिन्नविषयं वा ?। यदि भिन्नविषयं तर्हि केन सङ्गतम् । एवं हि घटज्ञानस्यापि पटज्ञानं फलं स्यात् । अथाभिन्नविषयं तदा साधितक्रिये कर्मणा विशेषाधायि किं कुर्वत्साधनं स्यात् । निश्चयमिति चेत् । न, प्रमाणस्यैव निश्चयात्मकं प्रमाणं तर्हि निश्चय एव प्रमाणमस्तु किं तेन । निश्चयकारणात्तदपि चेत् । चक्षुरादिकमस्तु । निश्चयात्मकप्रमाणवादिभिरपि निश्चयः फलमिष्यते। तेन ज्ञानान्तरं फलमिति। नापि प्रवृत्तिप्राप्ती।तयोः पुरुषसाध्यत्वात्। उक्तं च शास्त्रकारैः। न हि प्रमाणं गलेग्रहित्वा पुरुषं प्रवर्त्तयति। नाप्यर्थमुत्पाद्यार्थयति किंत्वर्थपरिच्छेदकत्वमेव प्रवर्त्तकत्वं प्रापकत्वं चेति। तस्मादर्थाधिगतिरेव फलम्। प्रमाणमपि ततत प्रतितेऽपरं किंतु प्रतीयतेऽनेनेति प्रमाणम् । प्रतितेरेव एतदुक्तं भवति।नात्मनः परमार्थेन प्रमाणं भिद्यते । किंचात्मैव ज्ञानावरणक्षयोपसंभवात् प्रमाणं स एव प्रतीतिरूपफलमित्याकारः प्रमाणमिति चेत् । न, अर्थाकारतायां ज्ञानस्य जडतास्यात् । अथ निलाद्याकारतैवार्थोद्भवति जडता यदि निलपरमाणुरूपता तदा कथं न जडता ?। अथ परमाणवात्मके विज्ञाने नीलप्रतिबिम्बमात्रमेव भवति। यथा अनिलात्मके स्फटिके नीलादीति। तदसत्। यतो न स्फटिकस्यापि निलपरिमाणुपरिणतेरन्यत्प्रतिबिम्बमिति। किं च कारणत्वाद्यपाऽर्थोदाकारो भवतीति तथा चक्षुरादेरपि स्यात्। अयोगत्वाच्चेति चेत्। तर्हि योगतैव वास्तु किमाकारेण। तेन यदुक्तमाकारमन्तरे प्रतिकर्म व्यवस्था न स्यादिति तन्निरस्तम्।ज्ञानमेव हि नियतार्थग्रहणमस्तु किमाकारेणेति। एत देवाह—अतद्रूपेऽपीत्यादि। यस्मादाकारवादिनापि वस्तुस्वाभाऽप्यमाकारग्रहणाज्ञानस्या-

भ्युपगतं तस्मात्तदेव नियतार्थग्रहणे ज्ञानस्यास्तु किं व्यवधिना। न च स्वाभाव्यमहेतुकं किंतु कर्मणः क्षयोपशमवैचित्र्यादात्मैव नियतार्थज्ञानाकारः तथापरिणमंस्तांस्तानर्थान्प्रतिपद्य तद्गतिस्थितमित्यन्यलक्षणतमःपटलं निरस्य प्रत्यक्षमक्षिसमुद्भवदर्शनाय श्रीसिद्धसेनघटितस्युतगीः शलाकां शुद्धामवाप्य विमलं विहितं मयैव तत्॥ इति श्रीशान्त्याचार्यविरचितायां वार्तिकवृत्तौ प्रत्यक्षपरिच्छेदः॥ १॥

एवं प्रत्यक्षसंख्यालक्षणगोचरफलविप्रतिपत्तिं निराकृत्येदानीं परोक्षस्य तां निराकर्त्तुमाह । पूर्वमेव परोक्षस्येत्यादिना

**पूर्वमेव परोक्षस्य विषयः प्रतिपादितः ।**
**प्रमाणफलसद्भावो ज्ञेयः प्रत्यक्षवद्बुधैः ॥ १ ॥**

अनुमानशब्दलक्षणस्य परोक्षस्यास्पष्टास्त एव स्युरित्यादिना विषयोऽस्पष्टात् । सामान्यं प्रतीयमानं विशेषमन्तरेणानुपपद्यमानं सलिलादावपि प्रवर्त्तयेत् । अथ विशिष्टं तदा वैशिष्ट्यं वक्तव्यम् । किं तत्र समवायः किं वा तस्येदमिति प्रतीतिरिति ?। न समवायः । तस्य निरस्तत्वात् । साधारणस्य च समवायस्य न विशेषकारित्वमिति । द्वितीये तु पक्षे इतरेतराश्रयत्वम् । तथाहि–। विशिष्टसामान्यप्रतीतौ विशेषप्रतीतिः, विशेषप्रतीतौ विशिष्टसान्यप्रतीतिरिति । किंच तस्येदमिति प्रतीतावपि नियतदेशविशेषाप्रतीतौ नानुमानादेः प्रवर्त्तेत व्याप्तिग्रहणकाले च वह्न्यादिसामान्यस्य सिद्धत्वाद्गृहीतग्राहित्वेन च प्रामाण्यं न स्यादिति । विशेषोऽपि सामान्येन प्रतीयत इति चेत् । सामान्येनेति कोऽर्थः । किं सामान्यमेव सामान्यं प्रतीत्य प्रतीयते, किंवा विशेष-

इति ?। यदि सामान्यं तदा तेनापि पुनरन्यत् सामान्यं ततो प्यन्यदित्यनवस्था । अथ नास्ति लक्षणं किंतु युगपदुभयं प्रतीयते । नैतदस्ति । उभयाप्रतीतेः । न ह्येकं दृश्यमानं सामान्यमपरो विशेषस्तत्र लक्ष्यते । उक्तं च ।

दोहिमिणएहियीयं सथमुल्लुएणतदमिस्यत्तं ।
जंसविसगपहाणत्तणेण अवणोणनिरपेक्खम् ॥

अथाभिन्नसामान्यप्रतीतौ नियतदेशविशेषप्रतीतिः । एवं ह्यशेषविशेषप्रतीतिरपि स्यात् । तथाहि—यद्यस्मादभिन्नस्वरूपं तत्तस्मिन् प्रतीयमाने प्रतीयते । यथैकव्यक्तिसामान्यप्रतीतौ व्यक्त्यन्तरसामान्यमभिन्नस्वरूपं च व्यक्त्यन्तरमिति कृष्णादेर्विशेषणस्याप्रतीतिरिति चेत् । विशेषणानामभेदप्रतीतिः स्यात् । भेदेऽपि उपाधिमति निश्चीयमानेऽशेषोपाधीनामपि निश्चयः स्यात् । तस्मादभिन्नसामान्यप्रतीतौ अशेषव्यक्तिप्रतीतिर्भवेदिति ।

किंच

कस्मात्सास्नादिमत्स्वेव गोत्वं यस्मात्तदात्मकम् ।
तादात्म्यमस्य कस्माच्चेत् स्वभावादिति गम्यताम् ॥

एवमभ्युपगममप्रदर्श्य दूषयन्ति जातिरन्यत्रातावेदागता नाश्रयान्तरात्प्रागासीत् । न च तद्देशे सा तयाऽऽकृता । कथम् ।

व्यक्तिनाशेनचेन्नष्टा गता व्यक्त्यन्तरम् ।
न तत्कुड्ये न स्थिता देशे सा जातिः क्वेति कथ्यताम् ॥
न याति न च तत्रासीदस्ति पश्चान्न चांशवत् ।
जहाति पूर्वं नाधारं महोऽव्यसनसंततिः ॥

एवं तादात्म्यपक्षेऽपि न युक्तः । तस्माद्विशेषा एव

सामान्यपरिणामवन्तोऽर्थाः परोक्षस्य विषया इति । ननु विशेषविषयत्वेऽनुमानादेः कथं न ताणादेः प्रतीतिर्न दूरप्रत्यक्षेऽपि तस्या प्रतीतेः । तदेवं न सामान्यं विषयः । नाप्यन्यापोहः । स हि पर्युदासरूपो वा स्यात्प्रसज्यरूपो वा? । प्रथमपक्षे वस्त्वन्तरमेव स्यात् । तच्च सामान्यं वा विशेषो वेति विधिरेव शब्दार्थः स्यात् । द्वितीये तु निषेधमेव मात्रेति प्रतिपाद्यते । तस्य च शब्दाद्यर्थत्वम् । अयुक्तप्रतीतेः । तथाहि—परप्रतिपादनार्थं तस्य प्रयोगः । परस्तु नीलाद्यर्थी नानीलनिषेधमात्रं जिज्ञासति । प्रतिपादकोऽपि तथैव प्रतिपादयति । अजिज्ञासितं प्रतिपादयन्नप्रेक्षाकारी स्यात् । अथ किमानयामीति जिज्ञासायामनीलमपि जिज्ञासितं नीलमित्यनिषेध्य तेनैवं प्रतिपाद्यस्य विधावेव जिज्ञासा न प्रतिषेधमात्रे । प्रतिपादकोऽपि तथैव प्रतिपादयति । सामर्थ्यादन्यप्रतिपत्तिरिति । नैतदस्ति । प्रतिपाद्यस्य सामान्येन विधावेव जिज्ञासा न प्रतिषेधमात्रे । विधिप्रतिपत्तौ सामर्थ्यादन्यप्रतिषेध इति । किंचायमपोहो भावे भावस्य वा प्रतीयेत, केवलो वा? । प्रथमपक्षे भावयोः प्रतीतिः किं तेनैवानुमानादिना किं वा प्रमाणान्तरेण? । यदि तेनैव तदा किं भावौ प्रतीत्य प्रतीयते, किं वापोहप्रतीताविति । न तावत्प्रथमः पक्षः । न हि नीलशब्देनानीलं प्रतीयते । प्रतीयमानत्वे वा कथं तन्निषेध इति । नीलं वा प्रतीत्यानीलापोहप्रतीतौ संवलन्ती प्रतीतिः स्यात् । अथ नीलत्वमेवानीलापोहात्मकं प्रतीयमानमुभयव्यवहारं रचयति तच्चायातोऽस्मत्पक्षमिति । नापि द्वितीयः पक्षः । न हि केवलोऽपोहः प्रतीयते । पश्चात्ताविव्यनुभवात् । नापि प्रमाणान्तरं किंचित्तत्रानीलप्रत्यायकमास्ति । येन तदपोहः प्रती-

येत । न चाभावेन भावस्य कश्चित्संबन्धः संभवतीत्युक्तम् । तस्मान्न भावसंबन्धित्वेनापोहस्य प्रतीतिरिति । केवलस्य च प्रतीतौ सर्वशब्दानां पर्यायता स्यात् । लिङ्गलिङ्गिनोरभावश्च भवेत् । तथाहि—यदेव लिङ्गिशब्दस्यापि तथा विशेषणविशेष्यभावोऽपि न स्यात् । असत्वं च न किंचिदस्ति । यदपोहेन सत्वाख्यं साधनं भवेत् । अथासत्यपि वाच्ये वासनानां नानात्वात्तज्जनितानां ध्वनीनां न पर्यायतेति । तन्न । वासनानामपि नानात्वानुपपत्तेः । ता हि अनुभवनिबन्धनाः । एकरूपस्य चापोहप्रतीतौ कथं वासनानां नानात्वमिति । तथा आकालापोहस्यैकरूपत्वादतीतानागतवर्त्तमानताव्यपदेशाः नोपपद्येरन्निति । अक्रियानिषेधस्य चाभावैकरूपस्य सद्भावेऽकार्षीत्, करोति, करिष्यतीति च व्यपदेशानुपपत्तिरिति वचनलिङ्गभेदश्च न स्यात् । तथा सर्वप्रमेयादिशब्दानामसर्वादेरभावादपोह्याभावेनापोहवाचकत्वं न स्यात् । अपि चापोहः किमाश्रितोऽनाश्रितो वा ? । अनाश्रितत्वे न कस्यापि । आश्रितत्वे गुणो वा स्यात्, सामान्यं वा भवेत् । तथाहि । यदि प्रतिव्यक्तिभिन्नस्तदा गुणः, अथैकस्तदा सामान्यमिति । अथापोह्यतेऽनेनेति ज्ञानाकारः, अपोह्यतेऽस्मिन्निति स्वलक्षणम्, अपोहनमपोह इत्यन्यनिषेधः, तदेवं विधिरूपापोहाभ्युपगमान्निषेधमात्रे यद्दूषणं तदसदिति । तथाहि । न तावत्स्वलक्षणं शब्दादिविषयः । अविद्यमानत्वात् । नापि स्वलक्षणम् । प्रत्यक्षवच्छब्देऽप्रतिभासनात् । तदुक्तम्—

शब्देनाव्यापृताक्षस्य बुद्धावप्रतिभासनात् ।
अर्थस्य दृष्टाविव तदनिर्देश्यस्य वेदकम् ॥

नापि [illegible]

किं तु स एव दृश्यविकल्प्यश्चैकीकृत्य बहीरूपतयाध्यस्तोऽ
पह्नमाकारः। वैभाषिकाणां तु आकाराभावाज्ज्ञानमेव बहीरूप
तयाऽध्यस्तमर्द्धचतुर्थकोटेोऽपोहइति न निषेधमात्रः केवलः।तस
विधिरूपतया वस्तुस्वभावव्यवस्थितेः ।

स्वभावपरभावाभ्यां यस्माद् व्यावृत्तिभागिनः ।
यतोयतोऽर्थानां व्यावृत्तिस्तन्निबन्धनाः ॥
जातिभेदाः प्रकल्प्यन्ते तद्विशेषावगाहिनः ।
तस्माद्यो येन शब्देन विशेषः संप्रतीयते ॥
नशक्यस्ततोऽन्येन तेन भिन्नव्यवस्थितिरिति ।

तेन न सर्वशब्दानां पर्यायता । नापि लिङ्गिनोरभावः
विशेषणविशेष्यभावो वा । तथाहि स्वकारणादेव भावा
सकलसजातीयविजातीयव्यावृत्ता जायन्ते । तेनानेकव्या
त्यात्मकेषु एकव्यावृत्त्या निश्चयेऽपि व्यावृत्यन्तरेण नि
श्चितास्तन्निश्चयाय शब्दलिङ्गप्रयोगे न पर्यायतामाप्नो
ति । वस्तुभूते चोपाधौ प्रवर्त्तमानः शब्दः उपाधिमन्तमशे-
षोपाध्युपकारकं निश्चित्याऽशेषोपाधीनां निश्चयात् प-
यतां शब्दान्तराणामापादयेदित्यादयो दोषा वास्तवे शब्दा
ग्रन्थकारैः प्रतिपादितास्तस्मादपोहपक्षो ज्यायानिति । अ-
त्रोच्यते । यथावदुक्त दृश्यविकल्पयोरेकीकरणमपोहो न तुच्छ-
रूप इति । तदेकीरणं किं तेनैव ज्ञानान्तरेणेति ? । न तावत्तदेव
विज्ञानं स्वाकारं दृश्यं च पृथक् प्रतिपाद्यैक्यं प्रतिपद्यते । अप्रती-
तेः, क्षणिकत्वाच्च । नापि ज्ञानान्तरम् । तद्धि भिन्नं स्यात, एकं वा
भवेदिति ।भिन्नं कथमेकं प्रत्येति । स्वसंवेदनं हि ज्ञानं न विषय-
दर्शनं तु दृश्यविषयमिति । एकं तु यदि द्वयं न प्रत्येति कथ-
मैक्यम् । अथैक्यं प्रत्येति कथं द्वयोरैक्यमिति । अथ वासना-
प्रबोधाद्विकल्पविज्ञानं सकलजातीयसाधारणमुत्पद्यतेस्यैक-

त्वग्रहणमुच्यते । न वस्तुभूतसमानपरिणाममन्तरेण । सजातीया-विभागानुपपत्तेरिति । एकार्थक्रियाकारित्वात्सजातीयत्वमिति चेत् । क्रियायाः किमन्यक्रियैक्यादैक्यं किं वा स्वरूपेणेति? । प्रथमपक्षे न स्यात् । द्वितीये तएवार्थक्रियाकारणाः किं नैकीभवन्ति अभ्युपेतहानिश्चेति । तदेवमत्र बहु वक्तव्यं तच्च नोच्यते विस्तरभयादिति । तन्नापोहोऽपि परोक्षस्य विषय इति । एवं विषयविप्रतिपत्तिं निराकृत्येदानीं फलविप्रतिपत्तिं निराकर्तुमाह—। प्रमाणफलमज्ञाबइति । यथैव हि प्रत्यक्षस्य प्रमाणमेव फलमर्थाधिगतिरूपं तदेव च प्रमाणपरिच्छेदकत्वात् । तथा परोक्षस्यापि विज्ञेयमिति । संख्याविप्रतिपत्तिं निराकुर्वन्नाह । परोक्षं द्विविधमिति ।

परोक्षं द्विविधं प्राहुर्लिङ्गशब्दसमुद्भवम् ।
लैङ्गिकप्रत्यभिज्ञादि भिन्नमन्ये प्रचक्षते ॥

अक्षाणां परं परोक्षम् । पारस्करादित्वात्सुडागमः । द्वौ विधौ प्रकारावस्येति द्विविधम् । द्वैविध्यमेवाह—लिङ्गशब्दसमुद्भवमिति । लिङ्गजनितं शब्दजनितमेव परोक्षार्थनिश्चायकं नान्यदिति । नन्वन्यदपि प्रत्यभिज्ञादिकं परोक्षं मन्यन्ते । तदेव लैङ्गिकप्रत्यभिज्ञादिभिन्नमन्ये वक्षते समानतन्त्राः । परोक्षं प्रत्यभिज्ञादि त्रिधा श्रुतमविप्लवमिति वचनादिति । तदयुक्तम् । यतः श्रौतं त्रिविधं भवति न त्वविप्लवमिति । तथाहि—प्रत्यक्षेण परोपदेशसहायेन यज्जन्यते ज्ञानं तच्छ्रौतं प्रत्यक्षपूर्वकम् । तथा लिङ्गेन परोपदेशरहितेन जनितं श्रौतं लिङ्गपूर्वकम् । परोपदेशेन तु केवलेन जनितं शब्दपूर्वकमिति । एवं त्रिविधं भवति श्रौतं न त्वविप्लवम् । प्रमाणान्तरत्वैः । प्रत्यक्षे हि परोपदेशस्यानपेक्षत्वात् । अथ तथापि किञ्चित्स्यात् तर्हि तत्रानु-

मानमेव स्यात् । तथाहि–परोक्षं हि वस्तुनः साक्षात्प्रतीयते किंतु अन्यदर्शनादन्यस्माच्च यद्यनियतात्प्रतीयेत तदा यत कुतश्चित्सर्वं प्रतीयेत। नियता च प्रतीतिर्लैङ्गिकमेव तत्र यदा-क्षानुसारि प्रत्यभिज्ञाज्ञानं तत्प्रत्यक्षमेव न श्रौतम्। यत्तु प्रत्यक्षा-निश्चितं दृष्टसाधर्म्यादर्थक्रियाकारित्वं निश्चीयते तल्लैङ्गिक-मेवेति कुतस्त्रिविधं परोक्षमिति। अथायमपि वह्निर्दाहादिसम-र्थइति सामर्थ्यविषयं प्रत्यभिज्ञानं न प्रत्यक्षम्। सामर्थ्यस्य परो-क्षत्वात्। नाप्यनुमानम्। व्याप्तिस्मरणाद्यननुभवात्। तस्मात्प्र-माणान्तरमिति।तदयुक्तम्। यस्मात्सामर्थ्यं वह्नेरन्यत्ततः प्रत्य-क्षेण तत्स्वरूपनिश्चयादेव सामर्थ्यस्य निश्चयाद्यो दाहिकां शक्तिं न जानाति स वह्निमपि। तत्स्वरूपापहारे भिन्नसामर्थ्यमिति चेत्। न, मन्त्रादेः तथाभूतस्यैव वह्निस्वरूपस्य पर्यायस्योत्पत्ति-रिति। भवतु सामर्थ्यं न निश्चयः मूढस्य दृष्टसाधर्म्यादनुमानमेवे-त्युक्तम्। व्याप्तिस्मरणं तु क्वचिदकस्माद्धूमदर्शनाद्वह्निप्रतिपत्ता-वपि दृष्टम्। अथार्थित्वात् पूर्वमेव सर्वस्य कृतत्वात्तथा प्रतिपत्ति-रत्रापि समानम्। किंच किं तत्प्रमाणान्तरम्? । श्रौतमिति चेत्। किमिदं श्रौतम्?। किं शब्दविषयं किंवा शब्दोल्लेखीति? । प्रथम-पक्षे श्रोत्रेन्द्रियज्ञानं सकलमेव श्रौतं स्यात् तच्चागमविरोधीति। तथाहि अष्टाविंशतिभेदमिति ज्ञानाभिधायी जैनागमः। स चैवं त्यक्तः स्यात्। अथ शब्दोल्लेखि। एवमपि मतिज्ञानं श्रौतं स्यात्। सविकल्पकं च सकलं प्रमाणं प्रसज्येत। तत्रेदं श्रौतस्य लक्षणं किं तर्हीत्याह–। परोपदेशजं श्रौतमिति।

**परोपदेशजं श्रौतमनिशेषं जगुर्जिनाः ।**
**परोक्षं प्रत्यभिज्ञादि त्रिधा श्रौतं न युक्तिमत् ॥**

परस्मै परस्मादुपदेशस्तस्माज्जातं यज्ज्ञानं तच्छ्रौतं जगुर्जिनाः। तथा चागमः।

सुयकारणं जनुसोसुयं च तक्कारणं जनु तम्मि।
णिरइसुयजुत्रयारो सुयञ्ञ परमच्छनुजीवो॥

अस्यायमर्थः। श्रौतस्य ज्ञानस्य कारणं यतः स इति शब्दः श्रौतं वा तत्कारणं तस्य शब्दस्य हेतुः। ततस्तस्मिन् शब्दे क्रियते श्रुतोपचारः। कारणे कार्योपचारात्कार्ये वा कारणोपचरादिति। परमार्थतः जीवः श्रौतमिति। ज्ञानस्य जीवात् कथंचिदभिन्नत्वादिति। नन्वनेन शब्दस्य जनकत्वं जन्यं वा ज्ञानं श्रुतमभिहितं तत्तु सकलमेव परोपदेशजं शरीरवेष्टीत् लक्षणेनोपदेशेन जनितस्यासंग्रहात्। न शब्दस्योपलक्षणत्वात्। यद्वा सापि शब्द एवेत्याह। साच शब्दच्छोत्रियंजन्तमिकयं मिपठवनुहोइकत्वाविहुतदभावे तदभिप्पानुक्कुणा इचेद्वा। अयमर्थः—सा च हस्तादिसंज्ञापरवन्धनाय क्रियामाणशब्दने प्रयुक्तत्वात् शब्दार्थो। शब्दस्यार्थो यस्या सा शब्दार्था। शब्दएवेत्यर्थः। कुत एतदित्याह। यत्तस्यांकितायां प्रत्ययो भवति। प्रतिपाद्यस्य चेष्ठायां स्त्रीलिङ्गत्वेऽपि प्राकृतत्वाल्लिङ्गव्यत्ययः। एतदेव समर्थयति। कर्त्तापि चेष्टायाहुतिरियस्मादर्थं यस्मात्कर्त्तापि तदभावे मूकत्वात्। यदभिप्रायः। शब्दार्थप्रतिपादनाभिप्रायः। करोति चेष्टा। हस्तादित्यर्थः। तस्मात्परोपदेशजं श्रौतमिति। तेन शब्दाभावेऽपि श्रौतं सत्यपिच शब्दो शब्दोल्लेख्यपि क्वचिन्न श्रौतमिति। अत एवाह। मतिशेषमिति। अपरोपदेशशब्दजनिताजनितमतिं प्रतिपादयन्ति स्म श्रुतनिस्तता चेति वचनात्। तस्माद्यदि प्रत्यभिज्ञा आप्तोपदेशजनिता तदा प्रत्यक्षार्थविषयत्वान्न प्रमाणान्तरम्। अथाप्तजनिता तदात्र विकल्पवन्न प्रमाणमिति निगमयन्नाह—। परोक्ष प्रत्यभिज्ञादीति।

सुयकारणं जनुत्तोसुयं च तक्कारणं तनु तम्मि ।
गिरइसुयनुवयारो सुयञ्च परमच्छनुजीवो ॥

अस्यायमर्थः । श्रौतस्य ज्ञानस्य कारणं यतः स इति शब्दः श्रौतं वा तत्कारणं तस्य शब्दस्य हेतुः । ततस्तस्मिन् शब्दे क्रियते श्रुतोपचारः । कारणे कार्योपचारात्कार्ये वा कारणोपचरादिति । परमार्थतः जीवः श्रौतमिति । ज्ञानस्य जीवात् कथंचिदभिन्नत्वादिति । नन्वनेन शब्दस्य जनकत्वं जन्यं वा ज्ञानं श्रुतमभिहितं तत्तु सकलमेव परोपदेशजं शरीरचेष्टात् लक्षणेनोपदेशेन जनितस्यासंग्रहात् । न शब्दस्योपलक्षणत्वात् । यद्वा सापि शब्द एवेत्याह । सा च शब्दच्छोत्रियजन्तनिकयं मिपठवनुहोइकत्वाविहुतदभावे तदभिप्पायानुकुण इचेट्ठा । अयमर्थः—सा च हस्तादिसंज्ञापरवन्यनाय क्रियामाणशब्दते प्रयुक्तत्वात् शब्दार्था। शब्दस्यार्थो यस्या सा शब्दार्था। शब्दएवेत्यर्थः । कुत एतदित्याह । यत्तस्यांक्रितायां प्रत्ययो भवति। प्रतिपाद्यस्य चेष्टायां स्त्रीलिङ्गत्वेऽपि प्राकृतत्वाल्लिङ्गव्यत्ययः। एतदेव समर्थयति। कर्त्तापि चेष्टायाहुतिरियस्मादर्थे यस्मात्कर्त्तापि तदभावे मूकत्वात् । यदभिप्रायः। शब्दार्थप्रतिपादनाभिप्रायः। करोति चेष्टा । हस्तादित्यर्थः । तस्मात्परोपदेशजं श्रौतमिति । तेन शब्दाभावेऽपि श्रौतं सत्यपिच शब्दो शब्दोल्लिख्यपि क्वचिन्न श्रौतमिति । अत एवाह । मतिश्रेयमिति । अपरोपदेशशब्दजनिताजनितमतिं प्रतिपादयन्ति स्म श्रुतनिस्ता चेति वचनात् । तस्माद्यदि प्रत्यभिज्ञा आप्तोपदेशजनिता तदा प्रत्यक्षार्थविषयत्वान्न प्रमाणान्तरम् । अथागमजनिता तदात्र विस्तरवन्न प्रमाणमिति निगमयन्नाह—। परोक्ष प्रत्यभिज्ञादीति ।

प्रमाणभूतं त्रिधेति । न युक्तियुक्तमिति । आगमबाधामाह
अन्यथेहादिकमिति ।

**अन्यथेहादिकं सर्वं श्रौतमेव प्रसज्यते ।**
**यच्चोक्तं नागमात्पक्षं मानं जाड्यजृम्भितम् ॥**

यदि सविकल्पकं सकलमेव श्रौतं तदा इहादिग्रह
णाद्येहादिपरिग्रह इति सकलमेव शब्दोल्लिखित्वात् श्रौ
स्यादिति । अथ क्वचिदागमत्यागोऽपि । यथेन्द्रियजं ज्ञा
परोक्षमति प्रत्यक्षं प्रत्यपादीति । तदयुक्तमित्याह । यथेत्यादि
तद्दिगम्बराणां चान्यविलसितम् । तथाहि–सकलवस्तुज्ञानापे
क्षयापरोक्षमिन्द्रियज्ञानमुक्तं न त्वेकस्मिन्नंशेन इति । तत्स्थि
द्विधा श्रौतमिति । एवं द्वैविध्यं व्यवस्थाप्येदानीं लैङ्गि
परोक्षव्याख्यानुमहाल्लिङ्गाल्लिङ्गिनीत्यादि ।

**लिङ्गाल्लिङ्गिनि यज्ज्ञानमनुमानन्तदेकधा ।**
**प्रत्येति हि यथा वादी प्रतिवाद्यपि तत्तथा ॥**

लिङ्गाल्लिङ्गविषयमपि ज्ञानं लिङ्गग्रहणाल्लिङ्गिन्यपि तद्ग
त्स्यितस्य प्रत्यक्षं भवति लिङ्गग्रहणम् । ननु तस्य तल्लि
गमेव न भवति यस्य तु लिङ्गितस्य न लिङ्गमन्तरेण ज्ञ
ज्ञानमिति किं लिङ्गग्रहणेन । ये लिङ्गमेवानुमानं मन्यन्ते
तन्निरासार्थं लिङ्गग्रहणमिति । लिङ्गाद्यल्लिङ्गिनि ज्ञान
तदनुमानं न लिङ्गमेवेत्यर्थः । यद्येवं तदा लिङ्गिनि ज्ञानमि
त्यवस्तु । अनेन हि तत्सुनिरस्तं भवति । नैवं हि प्रतिपत्ति
गौरवं स्यादिति । लिङ्गग्रहणमिति । स्वार्थपरार्थभेदेन द्वैविध्य
प्रतिपन्नास्तन्निरासार्थमाह । तदेकधेति । एकप्रकारैव परोक्षार्थस्य
प्रतिपत्तिरिति । तदेवाह । प्रत्येति हि यथावादी प्रतिवाद्यपि
तत्तथेति । हि यस्मादर्थे यस्मादन्यथानुपपन्नाल्लिङ्गाद्यथा स्वयं
वादी परोक्षं वस्तु प्रत्येति । प्रतिवाद्यपि तथैव तत्स्वयं

निश्चितात्सिङ्गात्प्रत्येति न परवचनादिति। तथाहि—। परवचनं यदि प्रमाणं तदा किं त्रिरूपवचनेन। प्रतिज्ञामात्रेणैवार्थसिद्धिः। अथाप्रमाणं तदा कथं ततो लिङ्गप्रतिपत्तिरिति। अथ प्रत्यक्षमेव तत्र प्रमाणं पश्य मृगो धावतीति। तत्संमुखीकरणादनुमानत्वं नाक्षिनिकोचादेरपि स्यात्। अथ शब्दस्य सर्वथाऽप्रमाणत्वदनुमानोपचरात् प्रामाण्यं नान्यथेति ख्यापनार्थमित्याह। उपचारेण चेत्तत्स्यादिति।

**उपचारेण चेत्तत् स्यादनवस्था प्रसज्यते।**
**अन्यस्यासाधनादाह लक्षणं न तु साध्ययोः॥**

यद्यनुमानोपकारमात्रेणानुमानत्वं वचनस्य तदा पुरुषादेरपि स्यादित्याह—। अनवस्थेव प्रसज्यते इति। उपचारेण प्रमाण्ये यत्किञ्चिदिति। दधिभक्षणादिकमपि अनुमानं स्यादिति। शब्दस्य चाप्तप्रतीतत्वेन प्रामाण्यस्य प्रतिपादयिष्यमाणत्वादिति। तस्मादेकधैवानुमानमिति। इदानीमवयवान्तरनिरासेन यस्यावयवस्य साधनाङ्गत्वं तदाह। अन्यस्य उपनयनिगमनादेरसाश्रयार्थित्वात् वास्तवापक्षधर्मेऽन्यद्व्यवस्था परार्थानुमाने तथैवास्तु। एवमसाधनाङ्गत्वात्प्रतिज्ञा साधनान्निरस्यति। अत्रोच्यते। तदुक्तम्। प्रतिज्ञा किं प्रमाणमुताप्रमाणमिति ब्रूमः। तर्हि किंतूपन्यासेन आप्तत्वासंदेहे तदुपयोगः। तन्निश्चये तु प्रतिज्ञामात्रादेव साध्यसिद्धिः। हेतूपन्यासोऽपि न युक्तः। किं पुनस्त्रैरूप्यवचनमिति। एतदेव दर्शयितुमाह। अन्यथानुपपन्नत्वमित्यादि।

**अन्यथानुपपन्नत्वं यत्र तत्र त्रयेण किम्।**
**नान्यथानुपपन्नत्वं यत्र तत्र त्रयेण किम्॥**

एतदुक्तं भवति । आप्तत्वं संदेहे अन्यथानुपपन्नादेव हेतुमात्रात् साध्यसिद्धेः किं त्रिरूपवचनेनेति । तथाहि–उपनयनिगमने तावत्सौगतैरेव निराकृते दृष्टान्ते दृष्टसामर्थ्यस्य हि हेतोः पुनर्धर्मिणि वचनमुपनयं वर्णयन्ति । तच्चायुक्तम् । पक्षधर्मवचनादेव तदर्थस्य गतत्वात् । अथानेनदृष्टसामर्थ्यस्य हेतोः ख्यापनं क्रियते तदा व्याप्तिवचनादेव सामर्थ्यसिद्धिः । यदि वानेन समर्थहेतुः ख्यापनं क्रियते तर्हि इदमेवास्तु किं हेतुवचनेन । तदेवं उपनयं निरस्यन्ति । निगमनमप्ययुक्तम् । तथाहि–गृहीतव्याप्तिकस्य हेतोर्धर्मिण्युपसंहारादेव निगमनार्थस्य गतत्वात्किं तेन । तदेवं त्रिरूप एव हेतुरिति । यत्र हेतोः साध्येन विनाऽनुपपन्नत्वं तत्र किं त्रैरूप्येण । तदभावे तथ्यामस्त्वन्यत्रत्वादौ सत्यपि त्रैरूप्ये अगमकत्वादित्याह–। नान्यथेत्यादि । तथाहि–। नित्यानित्यात्मकं सर्वं सत्वान्यथानुपपत्तेरित्युक्ते भवत्येव साध्ये प्रतीतिः । अथ सर्वं नित्यं सत्वान्यथानुपपत्तेरित्यपि किं भवति । व्याप्तेरग्रहणात् । अत्र व्याप्तेर्दृष्टान्ते ग्रहणे सति कथं न त्रैरूप्यम् । ननु दृष्टान्ते व्याप्तिग्रहणं यद्यसाकल्येन तदा, व्याप्तिग्रहणेऽपि न साध्यधर्मिणि हेतोर्गमकत्वं स्यात् । अथ साकल्यं न तदानुमानं गृहीतग्राहित्वादप्रमाणं स्यात् । अथ देशविशेषप्रतीत्यर्थमनुमानम् । तन्न । यत्र साधनं तत्र तत्र साध्यमिति आधारान्तरभावेनैव व्याप्तेर्ग्रहणात्कथं न विशेषप्रतीतिः । अथ आधारसामान्यस्यैव प्रति नाधारविशेषस्य । किमिदं सामान्यम् । कि विवक्षितसाध्यविशिष्टं किं वाऽविशिष्टमिति? । यदि साध्यविशिष्टं तदा कथं न साध्यप्रतीतिः । अथाविशिष्टं तदा न तत्र व्याप्तिरिति । अथ विवक्षितदेशमन्तरेणापि व्याप्तेरखण्डनात्तद्विशेषप्रतीतिरनुमाना

दिति । ननु सविशेषो व्याप्तिग्राहिणा प्रमाणेन प्रतिपन्नः किं
वा नेति? । यदि प्रतिपन्नस्तदा किमनुमानेन । अथ गृहीतस्तदा न
तस्य व्याप्तावन्तर्भाव इति तदेव व्याप्तिग्राहिणा प्रमाणेनान्य-
थानुपपत्तौ गृहीतायां न किञ्चित्त्रैरूप्येण । अथ यदि व्याप्तिग्रा-
हिणा प्रमाणेन साकल्येन व्याप्तिग्रहणं तदा किं हेतूपन्यासेन ।
साध्यस्य सिद्धत्वादिति । असत्यं प्रतिपाद्यार्थं हि तदुपन्यासः ।
तथाहि—द्विविधः प्रतिपाद्यो ऽगृहीतव्याप्तिको गृहीतव्याप्ति-
कश्च । तत्र । अगृहीतव्याप्तिग्राहकप्रमाणोपदर्शनमेव नोपपद्यते
धर्मं हेतूपन्यासमन्तरेण । तच्च सपक्षाद्यनपेक्षं प्रवर्त्तमानं त्रैरूप्यं
व्यपोहति । गृहीतव्याप्तिकस्य तु हेतूपदर्शनमात्रमेव क्रियते ।
युतत्त्रैरूप्यमुक्तम् । विदुषा वाच्यो हेतुरेव हि केवल इति । तदेवं
प्रति नियमेन किञ्चित्त्रैरूप्येण कार्यकारणभावाद्वा स्वभावाद्वा
नियामकादविनाभावनियमोऽदर्शनात्तु । न दर्शनादिति चेत् ।
न, दर्शनादर्शनाभ्यां नियमं मन्यन्ते किं तु तर्कादभ्यूह्यपर-
नाम्नः । तथाहि—। प्रमाणातादात्म्यतदुत्पत्ती यथा निश्चीयेते
तथा नियमोऽपि निश्चीयतां किं व्यवधिना । एतदेवाह—। का-
र्यकारणसद्भाव इत्यादि ।

कार्यकारणसद्भावस्तादात्म्यं चेत्प्रतीयते ।
प्रत्यक्षपूर्वकात्तद्वत् कथं नानुपपन्नता ।

ननु तर्कात्कार्यकारणत्वादि परस्य निश्चीयते, किं
तु बाधकप्रमाणात्तत्कथमेतदिति । अत्रेदमुच्यते । किमिदं
बाधकं प्रमाणम् । किं प्रत्यक्षमुतानुमानमिति । तत्र यद्यनु-
मानं तदानवस्था । नापि प्रत्यक्षम् । तद्धि निर्विकल्पकत्वा-
त्पुरोऽवस्थितयोरपि वह्निधूमयोः कार्यकारणभावं प्रत्येतुं
शक्नोति किमंग पुनः साकल्येनेति । तस्माद्यदि धूमस्यान्य-

एतदुक्तं भवति । आप्तत्वं संदेहे अन्यथानुपपन्नादेव हेतुमात्रात् साध्यसिद्धेः किं त्रिरूपवचनेनेति । तथाहि— उपनयनिगमने तावत्सौगतैरेव निराकृते दृष्टान्ते दृष्टसामर्थ्यस्य हि हेतोः पुनर्धर्मिणि वचनमुपनयं वर्णयन्ति । तच्चायुक्तम् । पक्षधर्मवचनादेव तदर्थस्य गतत्वात् । अथानेनदृष्टसामर्थ्यस्य हेतोः ख्यापनं क्रियते तदा व्याप्तिवचनादेव सामर्थ्यसिद्धिः । यदि वानेन समर्थहेतुः ख्यापनं क्रियते तर्हि इदमेवास्तु किं हेतुवचनेन । तदेवं उपनयं निरस्यन्ति । निगमनमप्ययुक्तम् । तथाहि—गृहीतव्याप्तिकस्य हेतोर्धर्मिण्युपसंहारादेव निगमनार्थस्य गतत्वात्किं तेन । तदेवं त्रिरूप एव हेतुरिति । यत्र हेतोः साध्येन विनाऽनुपपन्नत्वं तत्र किं त्रैरूप्येण । तदभावे सत्यासत्त्वन्यत्रस्यादौ सत्यपि त्रैरूप्ये अगमकत्वादित्याह—। नान्यथेत्यादि । तथाहि—। नित्यानित्यात्मकं सर्वं सत्त्वान्यथानुपपत्तेरित्युक्ते भवत्येव साध्ये प्रतीतिः । अथ सर्वं नित्यं सत्त्वान्यथानुपपत्तेरित्यपि किं भवति । व्याप्तेरग्रहणात् । अत्र व्याप्तेर्दृष्टान्ते ग्रहणे सति कथं न त्रैरूप्यम् । ननु दृष्टान्ते व्याप्तिग्रहणं यद्यसाकल्येन तदा व्याप्तिग्रहणेऽपि न साध्यधर्मिणि हेतोर्गमकत्वं स्यात् । अथ साकल्यं न तदानुमानं गृहीतग्राहित्वादप्रमाणं स्यात् । अथ देशविशेषप्रतीत्यर्थमनुमानम् । तन्न । यत्र साधनं तत्र तत्र साध्यमिति आधारान्तर्भावेनैव व्याप्तेर्ग्रहणात्कथं न विशेषप्रतीतिः । अथ आधारमात्रस्यैव प्रति नाधारविशेषस्य । किमिदं सामान्यम् । किं विवक्षितसाध्यविशिष्टं किं वाऽविशिष्टमिति? । यदि साध्यविशिष्टं तदा कथं न साध्यप्रतीतिः । अथाविशिष्टं तदा न तत्र व्याप्तिरिति । अथ विवक्षितदेशमन्तरेणापि व्याप्तेरवगमात्तद्विशेषप्रतीतिरनुमानात्

दिति। ननु सविशेषो व्याप्तिग्राहिणा प्रमाणेन प्रतिपन्नः किं वा नेति?। यदि प्रतिपन्नस्तदा किमनुमानेन। अथ गृहीतस्तदा न तस्य व्याप्तावन्तर्भाव इति तदेव व्याप्तिग्राहिणा प्रमाणेनान्यथानुपपत्तौ गृहीतायां न किञ्चित्त्रैरूप्येण। अथ यदि व्याप्तिग्राहिणा प्रमाणेन साकल्येन व्याप्तिग्रहणं तदा किं हेतूपन्यासेन। साध्यस्य सिद्धत्वादिति। असत्यं प्रतिपाद्यार्थं हि तदुपन्यासः। तथाहि—द्विविधः प्रतिपाद्यो ऽगृहीतव्याप्तिको गृहीतव्याप्तिकश्च। तत्र। अगृहीतव्याप्तिग्राहकप्रमाणोपदर्शनमेव नोपपद्यते प्रथमं हेतूपन्यासमन्तरेण। तच्च सपक्षाद्यनपेक्षं प्रवर्त्तमानं त्रैरूप्यं व्यपोहति। गृहीतव्याप्तिकस्य तु हेतूपदर्शनमात्रमेव क्रियते। एतत्त्रैरूप्यमुक्तम्। विदुषा वाच्यो हेतुरेव हि केवल इति। तदेवं सति नियमेन किञ्चित्त्रैरूप्येण कार्यकारणभावाद्वा स्वभावाद्वा नियामकादविनाभावनियमोऽदर्शनात्। न दर्शनादिति चेत्। न, दर्शनादर्शनाभ्यां नियमं मन्यन्ते किं तु तर्कादभ्यूह्यपरमात्मनः। तथाहि—। प्रमाणात्तादात्म्यतदुत्पत्ती यथा निश्चीयेते तथा नियमोऽपि निश्चीयतां किं व्यवधिना। एतदेवाह—। कार्यकारणसद्भाव इत्यादि।

कार्यकारणसद्भावस्तादात्म्यं चेत्प्रतीयते।
प्रत्यक्षपूर्वकात्तर्कात्तद्वत् कथं नानुपपन्नता।

ननु तर्कात्कार्यकारणत्वादि परस्य निश्चीयते, किं तु बाधकप्रमाणात्तत्कथमेतदिति। अत्रेदमुच्यते। किमिदं बाधकं प्रमाणम्। किं प्रत्यक्षमुतानुमानमिति। तत्र यद्यनुमानं तदानवस्था। नापि प्रत्यक्षम्। तद्धि निर्विकल्पकत्वात्पुरोऽवस्थितयोरपि वह्निधूमयोः कार्यकारणभावं प्रत्येतुं शक्नोति किमङ्ग पुनः साकल्येनेति। तस्माद्यदि धूमस्यान्य-

तिकमपि कारणं स्यात्तदायमपि धूमो न वह्नेरुत्पाद्यमान
उपलभ्येत । ततोऽभ्यूह्यत सकलमेवैतद्रूपं सर्वत्रैवंविधरूप
मन्तरेण नोपपद्यतइति । तच्च तर्काख्यं प्रमाणं केचित्प्रत्यक्ष
मन्यन्ते । अपरेऽनुमानमन्ये प्रमाणान्तरमिति । तदेवमन्यथा
ऽनुपपन्नत्वमेव निबन्धनं न त्रैरूप्यमिति । अथान्यथानुपपत्ति
र्व्यतिरेकः स नान्वयमन्तरेण घटते । तथाभूतश्च हेतुः क्वचिद्ध
र्मिण्युपसंहर्तव्यः । अन्यथा सर्वत्र प्रतीतिं जनयेन्न वा क्वचिद
पीति, तत्कथं न त्रैरूप्यमित्येतदाशङ्क्याह—।

**व्यतिरेकानुपपत्तिश्चेत्स्यादन्वयनिबन्धना ।**
**कथं सत्त्वं विना तेन क्षणिकत्वप्रसाधकम् ॥**

व्यतिरेकोऽनुपपत्तिश्चेदित्यादि । नैतदस्ति । न हि
सर्वत्रान्वयाविनाभूतो व्यतिरेकः परैरप्यभ्युपगम्यते । तदु
क्तम् । यो हि सकलपदार्थव्यापिनीं क्षणिकतामिच्छति त
प्रति दृष्टान्तस्यैवाभावादिति । एतदेवाह—कथमित्यादि
इदानीं स्वसिद्धान्तमाह—। विनाप्यन्वयमात्मादावित्यादि।

**विनाप्यन्वयमात्मादौ प्राणादिसाधनं यदा ।**
**तदा स्यान्नान्वयापेक्षा हेतोः साध्यस्य साधने ॥**

नेदं निरात्मकं जीवशरीरम् । अप्राणादिमत्वप्रसङ्गादि-
ति । अस्मिन् प्रयोगे केवलोऽपि व्यतिरेको गमकत्वे नि-
बन्धनमिति वर्णयन्ति । अथात्मानमन्तरेण प्राणादिसत्वस्यानु-
पपत्तिः कथं निश्चिता । स्तंभादिषु नैरात्म्यस्याप्राणादिमत्वेन
व्याप्तेरिति चेत् । ननु स्तंभादिषु नैरात्म्यं कथं निश्चितम्? । न
तावत् प्रत्यक्षेण । परोक्षत्वादात्मनः । तदभावद्वा ।
न पराभ्युपगमेन तु तन्निश्चये काल्पनिकत्वं

तोः स्यादिति । अत्रोच्यते । नित्यं सत्वादिप्रसङ्गान्न प्राणा-
येोऽहेतवः । हेतुश्चैषां यद्यचेतनस्तदा स्तंभादिष्वपि
सज्येरन् । सचेतनोऽपि किं नित्यः, किंवा क्षणिक
ति? । न तावन्नित्यः । अप्रच्युतानुत्पन्नस्थिरैकरूपस्य न-
दाचित् क्रियाविरामः स्यात् । यद्वा कदाचिन्न भवेदित्यु-
म् । क्षणिकमपि किं विद्यमानं करोति किंवाऽविद्यमानम् ।
थमपक्षे सर्वकार्यक्षणानामेककालताप्रसङ्गः । द्वितीये तु पूर्व-
व कार्यमुत्पाद्य कारणभावविशेषात्ततः । अथ प्राक्कालभावित्व
त्तरक्षणभावित्वं किं न भवति । को हि पूर्वोत्तरक्षणयोर्वि-
पः । संनिधानस्याविशिष्टत्वात् । अपरस्परकर्तृत्वस्यानभ्यु
गमात् ।अथ पूर्वमेव कार्यस्य सद्भावे किं कारणेन । उत्तरमपि-
ार्यस्य सद्भावे किं कारणेन । तस्मिन् सति उत्तरस्य भावा-
दिति चेत् । पूर्वस्यापि समानम् । अथैवमस्तु तथापि क्षणिकस्य
र्तृत्वं सिद्धमिति चेत् । न सिद्धम् । सत्तामात्रेण कर्तृत्वे सर्व-
ार्यकर्तृत्वे स्यात् । स्वसंतानमेकं न करोति । नान्य-
न्तानमिति चेत् । न, इतरेतराश्रयत्वप्रसङ्गात् । तथा-
हु--। कार्यत्वादेकसन्तानत्वमेकसन्तानत्वात्तत्कर्तृत्वमिति ।
न्न क्षणिकस्यापि कर्तृत्वम् । तस्मात्कश्चिदनाद्यपूर्वक-
स्य द्रव्यस्यैवोत्तरोत्तरेषु परिणतः कर्तृत्वं नान्यस्येति ।
न सिद्धं न प्राणादिरात्मानमन्तरेणोपपद्यत इति । श्रि।
ह्यात्मनिरैवान्वयमन्तरेणापि गमिकेति । ननु सम्बन्धम-
न्तरेण कथमन्वयानुपपन्नत्वमित्याशङ्क्याह-। सम्बन्धिन्यानि-
यादि ।

संबन्धिपक्ष्यां विभिन्नार्थेनवन्यः स्यान्न सोऽप्यन्न्।
अनवस्था प्रसज्येत तदन्यपरिकल्पने ॥

तिकमपि कारणं स्यात्तदायमपि धूमो न वह्नेरुत्पाद्यमान उपलभ्येत । ततोऽभ्यूह्यत सकलमेवैतद्रूपं सर्वत्रैवंविधरूपमन्तरेण नोपपद्यतइति । तच्च तर्काख्यं प्रमाणं केचित्प्रत्यक्षं मन्यन्ते । अपरेऽनुमानमन्ये प्रमाणान्तरमिति । तदेवमन्यथाऽनुपपन्नत्वमेव निबन्धनं न त्रैरूप्यमिति । अथान्यथानुपपत्तिर्व्यतिरेकः स नान्वयमन्तरेण घटते । तथाभूतश्च हेतुः क्वचिद्धर्मिण्युपसंहर्तव्यः । अन्यथा सर्वत्र प्रतीतिं जनयेन्न वा क्वचिदपीति, तत्कथं न त्रैरूप्यमित्येतदाशङ्क्याह—।

व्यतिरेकानुपपत्तिश्चेत्स्यादन्वयनिबन्धना ।
कथं सत्त्वं विना तेन क्षणिकत्वप्रसाधकम् ॥

व्यतिरेकोऽनुपपत्तिश्चेदित्यादि । नैतदस्ति । न हि सर्वत्रान्वयाविनाभूतो व्यतिरेकः परैरप्यभ्युपगम्यते । तदुक्तम् । यो हि सकलपदार्थव्यापिनीं क्षणिकतामिच्छति तं प्रति दृष्टान्तस्यैवाभावादिति । एतदेवाह—कथमित्यादि । इदानीं स्वसिद्धान्तमाह—। विनाप्यन्वयमात्मादावित्यादि।

विनाप्यन्वयमात्मा दौप्राणादिसाधनं यदा ।
तदा स्यान्नान्वयापेक्षा हेतोः साध्यस्य साधने ॥

नेदं निरात्मकं जीवच्छरीरम् । अप्राणादिमत्त्वप्रसङ्गादिति । अस्मिन् प्रयोगे केवलोऽपि व्यतिरेको गमकत्वे निबन्धनइति वर्णयन्ति । अथात्मानमन्तरेण प्राणादिमत्त्वस्यानुपपत्तिः कथं निश्चिता । स्तंभादिषु नैरात्म्यदृष्ट्याप्राणादिमत्त्वेन [illegible]दर्शनादिति चेत् । ननु स्तंभादिषु नैरात्म्यं कथं निश्चितम्? । न तावत् प्रत्यक्षेण । परोक्षत्वादात्मनः । तदभावस्य [illegible] [illegible]नेन परोऽभ्युपगमेन तु तन्निश्चये [illegible]

हेतोः स्यादिति । अत्रोच्यते । नित्यं सत्वादिप्रसङ्गान्न प्राणादयोऽहेतवः । हेतुश्चैषां यद्यचेतनस्तदा स्तंभादिष्वपि प्रसज्येरन् । सचेतनोऽपि किं नित्यः, किंवा क्षणिक इति? । न तावन्नित्यः । अप्रच्युतानुत्पन्नस्थिरैकरूपस्य न-कदाचित् क्रियाविरामः स्यात् । यद्वा कदाचिन्न भवेदित्युक्तम् । क्षणिकमपि किं विद्यमानं करोति किंवाऽविद्यमानम् । प्रथमपक्षे सर्वकार्यक्षणानामेककालताप्रसङ्गः । द्वितीये तु पूर्वमेव कार्यमुत्पाद्य कारणभावविशेषात्ततः । अथ प्राक्कालभावित्वं उत्तरक्षणभावित्वं किं न भवति । को हि पूर्वोत्तरक्षणयोर्विशेषः । संनिधानस्याविशिष्टत्वात् । अपरस्परकर्तृत्वस्यानभ्युपगमात् । अथ पूर्वमेव कार्यस्य सद्भावे किं कारणेन । उत्तरमपि कार्यस्य सद्भावे किं कारणेन । तस्मिन् सति उत्तरस्य भावादिति चेत् । पूर्वस्यापि समानम् । अथैवमस्तु तथापि क्षणिकस्य कर्तृत्वं सिद्धमिति चेत् । न सिद्धम् । सत्तामात्रेण कर्तृत्वे सर्वकार्यकर्तृत्वे स्यात् । स्वसंतानमेकं न करोति । नान्यसन्तानमिति चेत् । न, इतरेतराश्रयत्वप्रसङ्गात् । तथाहि--। कार्यत्वादेकसन्तानत्वमेकसन्तानत्वात्तत्कर्तृत्वमिति । तत्र क्षणिकस्यापि कर्तृत्वम् । तस्मात्कश्चिदप्रच्युतपूर्वरूपस्य द्रव्यस्यैवोत्तरोत्तरेषु परिणतः कर्तृत्वं नान्यस्येति । तेन सिद्धं न प्राणादिरात्मानमन्तरेणोपपद्यत इति । अपि । पक्षस्याप्युक्तिरेवान्वयमन्तरेणापि गमिकेति । ननु सम्बन्धमन्तरेण कथमन्वयानुपपत्तिरित्याशङ्क्याह--। सम्बन्धिनामित्यादि ।

संतानिधर्म्मां भिन्नानां स्वैरसम्बन्धः स्यान्न लोष्टवत् ।
अन्यथा प्रसज्येत तदन्यपरिकल्पने ॥

तथाहि—संबन्धिभ्यां संबन्धः भिन्नो, वाऽभिन्नो वा। यद्यभिन्नः। स्तदाऽसम्बन्धो वा स्यात्सम्बन्धी वा। अथ भिन्नस्तदा लोष्टकल्पो न तयोरसाविति। अथ संबन्धान्तरेण तयोरसाविति तस्याप्यभेदपूर्वः प्रसङ्गः, भेदेऽनवस्था स्यादिति। किञ्च संबन्धेन किं सम्बन्धः क्रियते संबद्धयोः, किंवाऽसंबद्धयोः?। यद्यसंबधयोस्तत्रासाध्यसिद्धयोः क्रियेत। अथ सम्बन्धयोस्तदा किं संबंधेन ? ततएव संबन्धत्वादिति। तस्मादनुपपत्तिरेव गमकत्वे निबन्धनसम्बन्धान्तरमिति। तदेवमन्वयं निरस्य पक्षधर्मत्वं निरस्यन्नाह—। कृत्तिकोदयपूरादे रित्यादि।

कृत्तिकोदयपूरादेः कलादिपरिकल्पनात्।
यदि स्यात् पक्षधर्मत्वं चाक्षुपत्वं नकिंचनौ ॥

कृतिकोदयश्च नदीपूरश्च। आदिग्रहणाच्चन्द्रोदयादिः। समुद्रवृद्ध्यनुमाने। तथाहि—। कृत्तिकोदयाद्रोहिण्युदयानुमाने कालो धर्मीपरिकल्प्यते। उपरिवृष्टानुमानेन दीसराष्ट्रेणविशेषइति। तथा समुद्रवृद्धावपि पिपीलिकोत्सरणमत्स्यविकारादेर्वृष्ट्यनुमानेभूतइति। एव यदि यत्किञ्चित्कल्पयित्वा पक्षधर्मत्वं व्यवस्थाप्यते तदाध्वनौऽनित्यत्वे साध्ये चाक्षुपत्वं पक्षधर्मः स्यात्। तत्रापि जगतो धर्मित्वेन कल्पनादिति। तथाहि—। जगद्धर्मी अनित्यशब्दयान्न भवतीति साध्यो धर्मश्चाक्षुपघटवत्त्वादिति। तन्न पक्षधर्मत्वमपि गमकत्वे निबन्धनमिति। विशेषेऽनुगमाभावात्सामान्यसिद्धसाध्यतेति। अनुमानदूषणं परिहर्तु माह—। समानपरिणामस्येत्यादि।

समानपरिणामस्य द्वयस्य नियमग्रहे।
न शक्तिर्न च वैफल्यं साधनस्य प्रसज्यते ॥

तुल्यपरिणामयोर्लिङ्गसाध्ययोः । नियमग्रहोऽन्यथानुपपन्नत्वग्रहे सति । नाशक्तिः । अननुगमात् । नापि सामान्यमात्रसाधनात्सिद्धसाध्यता दोषः । किंतु विशेषा एव समानपरिणामिनः साध्यन्त इति । एवं हेतुलक्षणमभिधायेदानीं पक्षलक्षणमाह—। इष्टं साधयितुं शक्यमित्यादि ।

इष्टं साधयितुं शक्यवादिना साध्यमन्यथा ।
साध्याभासमसाध्यत्वात्साधनागोचरत्वतः ॥

सिद्धं प्रत्यक्षादिबाधितं वादिना साधयितुं न शक्यते तथेष्टमपि साधनविषयीकृतं साध्यं नोक्तमेव । अन्यथेति । उक्तविपरीतं साध्याभासम् । असाध्यत्वादिति । सिद्धस्यासाधयितुमशक्यत्वात् । तथाहि—पूर्वं प्रमाणेन सिद्धमपि साधनमपेक्षते तथा तेनैव सिद्धसाधितस्य किमन्यदपेक्षेत । तथा ततोऽप्यन्यदिति न स्यात् साधननिष्ठेति । एवं सिद्धस्य साधयितुमशक्यत्वमिति । बाधितस्य च साधनागोचरत्वादित्याह—। साधनागोचरत्वतइति । प्रत्यक्षादिबाधितं प्रतिपाद्यमानो न साधनमपेक्षत इति । यद्वा सिद्धबाधितं च साधयितुं न शक्यते । ततो हेतोः साधनगोचरत्वं न भवतीति । एवं पक्षलक्षणमभिधायेदानीं बाधितोदाहरणान्याह । यथा सर्वगमित्यादि ।

यथा सर्वगमध्यक्षं बहिरन्तरनात्मकम् ।
नित्यमेकान्ततः सत्वाद्धर्मः प्रेत्यदुःखप्रदः ॥

सर्वगतं सामान्यं प्रत्यक्षं प्रति बाध्यमानं प्रत्यक्षबाधितम् । एकान्तेन नित्यं शब्दादि प्रतिज्ञायमानमनुमानबाधितम् । नित्य परलोके धर्मः सुखप्रदो न भवतीति । प्रतिज्ञा पुनः [illegible] [illegible] प्रत्यक्षपूर्वक [illegible] [illegible] बहिरन्तरनात्मकं सर्वमिति । [illegible]

वस्य प्रतिज्ञायमानस्य प्रत्यभिज्ञाप्रत्यक्षेणानुमानेन वाऽन्यथा बाधनान्न पृथगुदाहरणं युक्तं स्यादिति। एवं हेतुलक्षणमभिधायेदानीं हेत्वाभासानभिधातुमाह—। रूपादिसिद्धित इत्यादि।

रूपादिसिद्धितः सिद्धो विरुद्धोऽनुपपत्तिमान्।
साध्याभावं विनाहेतुर्व्यभिचारिविपक्षगः॥

स्वरूपासिद्धिः। अनित्यः शब्दश्चाक्षुषत्वात्। सन्दिग्धसिद्धः वह्निसिद्धावुपादीयमानो धूमरूपतया संदिह्यमानो वाष्पसंघातः। भागासिद्धो यथा—सर्वमनित्यम्। प्रयत्नानन्तरीयकत्वात्। वाद्यसिद्धः सांख्यस्य सुखादीनामचैतन्यं साधयतः। यथा अचेतनाः सुखादयः। अनित्यत्वादिति। प्रतिवाद्यसिद्धो वैशेषिकस्य जैनं प्रति द्रव्यादीनां सत्त्वं साधयतः। यथा सन्ति द्रव्यादीनि सत्ताभिसम्बन्धत्वादिति। आश्रयासिद्धो यथेश्वरः सर्वज्ञः सर्वकर्तृत्वादिति। संदिग्धाश्रयः, यथेह निकुञ्जे मयूरः। केकायितादित्यादयः आदिग्रहणेन गृह्यन्ते। विरुद्धमभिधातुमाह—। विरुद्ध इत्यादि। साध्याभावाव्यभिचारी विरुद्धः। यथा—अनित्यः शब्दः कृतकत्वादिति। इदानीमनैकान्तिकमाह—। व्यभिचारीति। सपक्षविपक्षगामी अनैकान्तिक इति। अथवा एकान्तवादिनां सर्व एव हेतुस्त्रयीं दोषजातीं नातिक्रामतीत्याह—। असिद्धः सिद्धसेनस्येत्यादि। सिद्धसेनस्य सूत्रकर्तुः साकल्येनासिद्धत्वात् सकल एव हेतुरसिद्ध इति। तथाहि—। सामान्यं वा हेतुः स्याद्विशेषो वा?। अथोभयं वा पूर्ववन्निरासात्। तत्र सामान्यं सकलव्यापि सकलस्याप्यव्यापि वा हेतुत्वेनोपादीयमानं प्रत्यक्षसिद्धं वा स्यादनुमानसिद्धं वा भवेत्। न तावत्प्रत्यक्षसिद्धम्। तद्धि यथानुभासिन्या प्रवर्तते। [illegible] च विनिश्चितैकान्तमिव सन्निकृष्टमनन्तरमनुमानि ज्ञानं नैव

प्रवर्तितुमुत्सहते न सकलदेशकालव्यापिनि । अथ नियतदेशस्वरूपाव्यतिरेकात्तन्निश्चये तस्यापि निश्चय इति । तन्नियतदेशस्वरूपाव्यतिरेके नियतदेशतैव स्यान्न व्यापिता । तन्न व्याप्तिसामान्यरूपो हेतुः प्रत्यक्षसिद्धः । अनुमानसिद्धतायामनवस्थां प्रतिपादयति । तदुक्तम् ।

सामान्यं नानुमानेन विना यस्य प्रतीयते ।
न च लिङ्गविनिर्मुक्तमनुमानं प्रवर्तते ॥
अज्ञातस्य लिङ्गत्वं न च केनचिदिष्यते ।
न चानवगतं लिङ्गं किञ्चिदस्ति प्रकाशकम् ॥

तस्याप्यनुमानेन स्यादन्येन गतिःपुनरनुमानान्तरादेव चाते नैवं कल्प्यते ।

लिङ्गलिङ्गानुमानानामानन्त्यादेकलिङ्गिनि ।
गतिर्युगसहस्रेषु बहुष्वपि न विद्यते ।

अपि चाशेषव्यक्त्याधेयस्वरूपं । प्रत्यक्षानुमानाभ्यां सामान्यं निश्चयमानं स्वाधारनिश्चयमुत्पादयेत् तन्निश्चयोऽपि स्वाधारनिश्चयमिति सकलः सकलज्ञः प्रसज्येत । तन्नैकान्तसामान्यरूपो हेतुः । साकल्येन सिद्धः । नापि विशेषरूपैकान्तेन विशेषः परमाणुरूपः स्यात् । तस्य च न प्रत्यक्षानुमानाभ्यां सिद्धिरित्युक्तम् । न चानन्वितस्य हेतुत्वं सिद्धम् । [illegible] साध्यान्यथानुपपत्त्येन न सिद्धौ । यदि का-ऽसिद्धत्वादयः तौ निरस्तौ । तथा [illegible] सति तौ स्याताम् । तद्भावे नाव्यसिद्धाविति । [illegible] हेतुर्न सिद्ध इति । [illegible]

वस्य प्रतिज्ञायमानस्य प्रत्यभिज्ञाप्रत्यक्षेणानुमानेन वाऽन्यथ वाधनान्न पृथगुदाहरणं युक्तं स्यादिति । एवं हेतुलक्षणमभि धायेदानीं हेत्वाभासानभिधातुमाह—। रूपादिसिद्धित इत्यादि

रूपादिसिद्धितः सिद्धो विरुद्धोऽनुपपत्तिमान् ।
साध्याभावं विनाहेतुर्व्यभिचारिविपक्षगः ॥

स्वरूपासिद्धिः । अनित्यशब्दश्चाक्षुषत्वात् । संदिग्धसिद्धः वह्नि सिद्धावुपादीयमानो धूमरूपतया संदिह्यमानो वाष्पसंघातः भागासिद्धौ यथा—सर्वमनित्यम् । प्रयत्नानान्तरीयकत्वात् । वाद्य सिद्धः सांख्यस्य सुखादीनामाचैतन्यं साधयतः । यथा अचेतना सुखादयः । अनित्यत्वादिति । प्रतिवाद्यसिद्धौ वैशेषिकस्य जैन प्रति द्रव्यादीनां सत्वं साधयतः । यथा सन्ति द्रव्यादीनि सत्तासि सम्बन्धत्वादिति । आश्रयासिद्धो यथेश्वरः सर्वज्ञः सर्व कर्तृत्वादिति । संदिग्धाश्रयः, यथेह निकुञ्जे मयूराः । केकायिता दित्यादयः आदिग्रहणेन गृह्यन्ते । विरुद्धमभिधातुमाह— विरुद्धइत्यादि । साध्याभावाव्यभिचारी विरुद्धः । यथा— अनित्यः शब्दः कृतकत्वादिति । इदानीमनैकान्तिकमा ह—। व्यभिचारीति । सपक्षविपक्षगामी अनैकान्तिक इति अथवा एकान्तवादिनां सर्व एव हेतुस्त्रयीं दोषजातां नातिक्राम तीत्याह—। असिद्धः सिद्धसेनस्येत्यादि । सिद्धसेनस्य सूत्रकर्तुः साकल्येनासिद्धत्वात् सकल एव हेतुरसिद्ध इति । तथाहि—। सा मान्यं वा हेतुः स्याद्विशेषो वा ? । अयोऽस्य च पूर्वमेव निरा सात् । तत्र सामान्यं सकलव्यापि सकलस्वाश्रयव्यापि वा हेतुत्वेनोपादीयमानं प्रत्यक्षसिद्धं वा स्यादनुमानसिद्धं वा भवेत् । न तावत्प्रत्यक्षसिद्धम् । तद्धि अक्षानुसारितया प्रवर्तते । अक्षं च नियतदेशानेव सन्निकृष्यतेअतस्तदनुसारि ज्ञानं तत्रैव

क्षणिकत्वेन नष्टत्वान्न शब्दविषयः। तथाहि—वस्तुनो ग्रहणं, ततो निश्चयस्तदनन्तरं शब्दस्मरणं, ततो नियोग इति। एवं त्रिचतुरक्षणेषु सुदूरमुत्सन्नत्वान्न शब्दगोचरता। अथ तत्सजातीयक्षणस्य विद्यमानत्वात् कथं न शब्दविषयता तदसत्। न ह्यगृहीतं विद्यमानमपि शब्दविषयतामुपयाति। यथा स्वाद्यगृहीतं विद्यमानमपि, गोशब्दस्य पूर्वापरैकीकरणप्रक्रमेण नियोज्यमानः शब्दः कल्पितविषय एव नियोजितः स्यात्। न च वस्तु शब्दनियोगगोचरः। किं च वस्तुनि सम्बन्धकरणं प्रत्यक्षेण वा स्यादनुमानेन वा?। न तावत् प्रत्यक्षेण। तेन पुरोऽवस्थितरूपमात्रस्य प्रकाशनाच्छब्दस्य। न च तयोर्वाच्यवाचकसम्बन्धोपकर्तुं शक्यते। अथेन्द्रियज्ञानारूढ एव रूपव्युत्पत्तिभिर्दृश्यते। इदमेतच्छब्दवाच्यमस्येदमभिधानमिति। असदेतत्। तथाहि-अस्येदं वाचकमिति कोऽर्थः?। किं प्रतिपादकं, यदि वा कार्यं, कारणं, चेति?। तत्र यदि प्रतिपादकं तत्किमधुनैवाऽथान्यदा?। तत्र यद्यधुना शब्दरूपमर्थस्य प्रतिपादकं विशदेन रूपेणेति। तदयुक्तम्। अक्षव्यापारेणैव तथानीलादेरवभासनान्न तत्र शब्दव्यापारस्योपयोगः। अथान्यदा लोचनपरिस्पन्दाभावेन शब्दार्थोनुद्भासयेत्तदापि किं विशदेनाकारेण, आकारान्तरेण वा?। यदि विशदेन तदा चक्षुरादीनां वैफल्यमापद्येत। प्रवृत्तिश्च न स्यात् सर्वथा वस्तुनः। प्रतिपन्नप्रतिपन्नत्वात्। न हि प्रतिपन्न एव तावन्मात्रप्रयोजना प्रवृत्तिर्युक्ता। वृत्तेरविरामप्रसङ्गात्। अथ किंच प्रतिपन्नं रूपमस्ति तदर्थं प्रवर्तनम्। ननु यदप्रतिपन्नं व्यक्तिरूपं प्रवृत्तिविषयस्तर्हि न शब्दार्थस्तदेव च परमार्थिकम्। ततोऽर्थक्रियादर्शनात्। नान्यत्। तस्यार्थक्रियाविरहात्। अथ कालान्तरे स्फुटता न लोचनापायेविनश्वराकारस्तदा सम्बन्धव्युत्पत्ति

नाद्विरुद्धाविति । तथाहि—निश्चयेन सहाप्रतिपत्तिर्नन्देहावपि विरुद्धावेव तदविनाभूतौ वाऽसिद्धानैकान्तिकाविति । सकल एव हेतुर्विरुद्ध इति द्वेधासमंतभद्रस्येति । स हि प्रतिबंधविकलानां सर्वेषामेव हेतूनां व्यभिचारित्वं मन्यते । न चैकान्तसामान्ययोर्विशेषयोर्वा प्रतिबन्धउपपद्यते । तथाहि—सामान्ययोरेकान्तमनित्ययोः परस्परमनुपकार्योपकारभूतयोः कः प्रतिबन्धः । विशेषयोस्तु नियतदेशकालयोः प्रतिबन्धग्रहेऽपि तत्रैव तयोरयं स्यात् । साध्यधर्मिण्यगृहीतप्रतिबन्ध एवान्यो विशेषहेतुत्वेनोपादीयमानः कथं नानैकान्तिकइति । तस्मात् समानपरिणामस्यैव सामान्यविशेषात्मनो हेतोरनेकान्तात्मनि साध्ये गमकत्वं नैकान्तसाधन इति स्थितम् । सर्वज्ञसाधनविधौ परलोकसिद्धावात्मादि यच्च निरूपद्रवसौख्यहेतुः तत्रोपयुक्तमुत्तयात्मकवस्तुसिद्धं व्युत्पादिते विशदमेतदिहानुमानम् । इति श्रीशान्त्याचार्यविरचितायां वार्तिकवृत्तावनुमानपरिच्छेदः ।

एवं प्रत्यक्षानुमाने व्याख्यायेदानीं शब्दप्रमाणव्याख्यानमाह—। ननु शब्दस्य सङ्केतवृत्तेरवस्तुविषयत्वात् कुतः प्रामाण्यमिति? । तथाहि—ये यत्राकृतसङ्केताः शब्दास्ते तमर्थं नाभिदधति । यथा—गोशब्दादयोऽश्वादिकम् । अकृतसंकेताश्च सर्वएव शब्दाः परमार्थवस्तुनीति व्यापकानुपलब्धिः ॥ अशक्यक्रियत्ववैफल्याभ्यां न तावदयमसिद्धो हेतुः । तथाहि—। समुत्पन्ने वा वस्तुनि सङ्केताः क्रियन्तामनुत्पन्ने वा? । न तावच्चानुत्पन्ने । न ह्यनुत्पन्नं वस्तु शब्दस्यान्यस्य वा विषयतामुपयाति । शब्दो ह्यनुत्पन्नविषये नियोज्यमानो न कल्पितगोचरतामतिक्रमेत । शशविषाणादिशब्द इव । तन्नानुत्पन्नं सङ्केतभूमिः । उत्पन्नमपि किं गृहीतमगृहीतं वा? । न तावदगृहितं वस्तु संकेतगोचरीति । प्रत्यक्षाद् गृहीतमपि

क्षणिकत्वेन नष्टत्वान्न शब्दविषयः। तथाहि—वस्तुनो ग्रहणं, ततो निश्चयस्तदनन्तरं शब्दस्मरणं, ततो नियोग इति। एवं त्रिचतुर-क्षणेषु सुदूरमुत्सर्पत्वान्न शब्दगोचरता। अथ तत्सजातीयस्य विद्यमानत्वात् कथं न शब्दविषयता। तदसत्। न ह्यगृहीतं विद्य-मानमपि शब्दविषयतामुपयाति। यथा स्वाद्यगृहीतं विद्यमान-मपि, गोशब्दस्य पूर्वापरैकीकरणप्रक्रमेण नियोज्यमानः शब्दः कल्पितविषय एव नियोजितः स्यात्। तन्न वस्तु शब्दनियोगगो-चरः। किं च वस्तुनि सम्बन्धकरणं प्रत्यक्षेण वा स्यादनुमा-नेन वा?। न तावत् प्रत्यक्षेण। तेन पुरोऽवस्थितवस्तुरूपमात्रस्य प्रकाशनाच्छब्दस्य। न च तयोर्वाच्यवाचकसम्बन्धोपकर्तुं शक्य-ते। अथेन्द्रियद्वारारूढ एव रूपव्युत्पत्तिर्दृश्यते। इदमेतच्छ-ब्दवाच्यमस्येदमभिधानमिति। असदेतत्। तथाहि-अस्येदं वाच-कमिति कोऽर्थः?। किं प्रतिपादकं, यदि वा कार्यं, कारणं, चेति?। तत्र यदि प्रतिपादकं तत्किमधुनैवाऽथान्यदा?। तत्र यद्यधुना शब्द-रूपमर्थस्य प्रतिपादकं विशदेन रूपेणेति। तदयुक्तम्। अश-ब्दव्यापारेणैव तथानीलादेरवभासनान्न तत्र शब्दव्यापारस्यो-पयोगः। अथान्यदा लोचनपरिस्पन्दाभावेन शब्दार्थानुद्भासने तदापि किं विशदेनाकारेण, आकारान्तरेण वा?। यदि विशदेन तदा चक्षुरादीनां वैफल्यमापद्येत। प्रवृत्तिश्च न स्यात् सर्वदा वस्तुनः प्रतिपन्नप्रतिपन्नत्वात्। नहि प्रतिपन्न एव [illegible] योजना प्रवृत्तिर्युक्ता। वृत्तेरविरामप्रसङ्गात्। अथ किंच प्रतिपन्न रूपमस्ति तदर्थं प्रवर्तनम्। ननु यः प्रतिपन्न [illegible] प्रवृत्ति-विषयस्तर्हि न शब्दार्थस्तदेव [illegible] नात्। नान्यत्। तस्य [illegible] नात न [illegible]

नाङ्गीकृतमिति । तथाहि–नित्यत्वेन सत्त्वप्रतिपत्तिरङ्गीकृतेति विरुद्धत्वेन तद्विनाभूतो व्यभिचारी नैकान्तिक इति । सकल एव हेतुर्विरुद्ध इति द्वैराशिकमतमसूचयति । न हि प्रतिबन्धविकलानां सर्वेषामेव हेतूनां व्यभिचारित्वं मन्यते । न चैकान्तसामान्ययो-र्विशेषयोर्वा प्रतिबन्धस्सम्पद्यते । तथाहि–सामान्ययोरेकान्त-नित्ययोः परस्परमनुपकार्योपकारकयोः कः प्रतिबन्धः । विशे-षयोस्तु नियतदेशकालयोः प्रतिबन्धग्रहेऽपि तन्नैव तयोरयं स्यात् । साध्यधर्मिण्यगृहीतप्रतिबन्ध एवान्यो विशेषहेतुत्वेनोपा-दीयमानः कथं नानैकान्तिक इति । तस्मात् समानपरिणामस्यैव सामान्यविशेषात्मनो हेतोरनेकान्तात्मनि साध्ये गमकत्वं नैकान्तसाधन इति स्थितम् । सर्वज्ञसाधनविधौ परलोकसिद्धा-वात्मादि यच्च निरूपद्रवसौख्यहेतुः तत्रोपयुक्तमुपपादनमत्र हेतु-निष्ठं व्युत्पादितं विशदमेतदिहानुमानम् । इति श्रीशान्त्या-चार्यविरचितायां वार्त्तिकवृत्तावनुमानपरिच्छेदः ।

एवं प्रत्यक्षानुमाने व्याख्यायेदानीं शब्दप्रमाणव्याख्या-नमाह–। ननु शब्दस्य सङ्केतवृत्तेरवस्तुविषयत्वात् कुतः प्रामाण्य-मिति? । तथाहि–ये यत्राकृतसङ्केताः शब्दास्ते तमर्थं नाभिदधति । यथा–गोशब्दादयोऽश्वादिकम् । अकृतसंकेताश्च सर्वएव शब्दाः-परमार्थवस्तुनीति व्यापकानुपलब्धिः ॥ अशक्यक्रियत्ववैफल्याभ्यां न तावदयमसिद्धो हेतुः । तथाहि–। समुत्पन्ने वा वस्तुनि सङ्केताः क्रियन्तामनुत्पन्ने वा? । न तावद्यानुत्पन्ने । न ह्यनुत्पन्नं वस्तु शब्दस्यान्यस्य वा विषयतामुपयाति । शब्दो वाऽनुत्पन्नविषये नियोज्यमानो न कल्पितगोचरतामतिक्रमेत् । शशविषाणादिशब्द इव । तन्नानुत्पन्नं सङ्केतभूमिः । उत्पन्नमपि किं गृहीतमगृहीतं वा? । न तावदगृहितं वस्तु संकेतगोचरीति । प्रसङ्गाद् गृहीतमपि

पुरः परिस्फुटमुद्भासमानव्यक्तिस्वरूपं व्यवसन्ती हृदियाभि जल्पाकारं प्रतीयते न तद्व्यतिरिक्तो वर्णाक्षराद्याकारशून्यः प्रतिभासो लक्ष्यते। वर्णादिस्वरूपरहितं च जातिरूपमुपगम्यते। तन्न कल्पनावसेयापि सा। यच्च नक्रविद्विज्ञाने भाति। तदसत्। शशविषाणमिव। भवतु वा जातिः शब्दार्थस्तथापि न शब्दात्प्रवृत्तिः स्यात्। ज्ञानमात्रलक्षणत्वाज्जात्यर्थक्रियायाः। तस्यास्तु तदैव निष्पन्नत्वात्। अथ जाता व्यक्तिर्लक्ष्यते तेन लक्षितलक्षणावृत्तिः। दृष्टक्रमवत् प्रतीतेरभावात्पूर्वं जातिः पश्चाद्व्यक्तिरिति। किञ्च यदि नाम शब्दाज्जातिराभाति व्यक्तेः किमायातम् येन तां लक्षति। सम्बन्धत्वाच्चेत्। संबन्धस्तयोः किं तदैव प्रतीयते, आहोस्वित्। पूर्वम्। ? न तावत्तदा। व्यक्तेरनधिगते अधिगमे वा किं लक्षितलक्षणया। सैव शब्दार्थः स्यात्। तत्तदनधिगम्। गमेनतद्गतसंबन्धानधिगतिर्न तदा तत्प्रतीतिः। नापि पूर्वम्। यदि नानैकदाऽकार्यकारणभूतयोः ताभ्यां तथा ग्राह्यमिति कोऽयं नियमः ?। अथ जातेरिदमेव सहभावस्तथापि सर्वदारूपं यदुत विशेषनिष्ठता। ननु सर्वदा सर्वजातिव्यक्तिनिष्ठेति किमध्यक्षेणाधिगम्यतेऽनुमानेन वा ?। न तावत्प्रत्यक्षेण। सर्वव्यक्तीनां युगपदप्रतिभासमानात्। नैकदा तन्निष्ठता तेन गृह्यते क्रमेणापि व्यक्तिप्रतीतौ निरवधिर्व्यक्तिपरम्पराया सकलायाः परिच्छेत्तुमशक्यत्वादिति न तन्निष्ठाताग्रहः। नाप्यनुमानेन। तत्पूर्वकत्वेन तस्याप्रत [illegible]नेः। तच्च जात्या व्यक्त्युपलक्षणम्। किंच जातेरपि श [illegible] न सम्भवति। तत्र सङ्केतासम्भवात्। तथाहि [illegible] स सङ्केतस्तत्प्रतिपत्तिश्च न प्रत्यक्षानुमानाभ्यां [illegible]

कप्रमाणाधिगतमेवानवस्थेतरेतराश्रयत्वं वा स्यादिति । किंच शब्दवाच्यं यद्यक्षणिकं तदा व्यवहारकालभाविक्रमवद्विज्ञानं नोत्पद्यते । नाक्रमात्क्रमिणो भावः । न च स्वविषयज्ञानोत्पादनादन्यद्वाच्यत्वम् तन्न शब्दात् विज्ञानमवस्तुविषयत्वात्प्रमाणमित्याशङ्क्याह–। तापच्छेदकपैः शुद्धमिति ।

**तापच्छेदकपैः शुद्धं वचनं त्वागमं विदुः ।**
**तापो ह्याप्तप्रणीतत्वमाप्तेरागादिसंक्षयात् ॥**

तापश्च छेदश्च कपश्च तैर्यद्वचनं शुद्धं तत्प्रमाणमिति । न शब्दस्य बाह्यार्थं विनाभावित्वेनार्थप्रतिपादकत्वात्प्रामाण्यं किं तु पुरुषप्रामाण्यमेव संक्रान्तं प्रमाणशब्दत्वेनाभिधीयतइत्युक्तम् । यथाशक्यक्रियात्ववैफल्यादिदूषणमभाक्षणिकपक्षाश्रयणेन । तन्नोभयात्मकवस्तुवादिनां क्षतिमावहति । अस्पष्टविशेषविषयत्वं च परोक्षस्योक्तम् । तेन न केवलप्रामाण्यपक्षभावे दोषः संभवी । अथ किमिदमस्पष्टत्वम् ? । किं ग्रहणमुताग्रहणम् । यदि ग्रहणं कथमस्पष्टत्वम् । अथाग्रहणं तदा कथं तत्प्रतीतिरिति । नानिदम् । तत्त्वप्रतीतेरस्पष्टत्वप्रतिपादनात् । अपि च घटशब्दादुत्पन्नं विज्ञानं पटं किं न प्रत्येति । यदि निर्विषयं शाब्दं विज्ञानम् । अतः सङ्केतवशाद्वस्त्वन्तरमपि प्रत्येत्येव । ननु का प्रतीतिः किं ग्रहणमाहोस्विदग्रहणम् । यदि ग्रहणं तदा कथं निर्विषयम् ? । अथाग्रहणं तदा सद्विषयार्थः । अथ दृश्यविकल्पैकीकरणेन तद्रूपव्यवसायः नाग्रहणाद्व्यवसायपोगात् । प्रत्यक्षस्यापि ग्रहणं न व्यवसायात् । न हि प्रत्यक्षं वस्तु अपःनर्दनक्रमयोगेन गृह्णाति, किं तर्हि तद्रूपव्यवसाय एव तद्ग्रहः । स च शाब्देऽपि समानः किं तु स्पष्टास्पष्टत्वकृतो विशेषइति । नन्वेवं सर्वनिगमानां प्रमाणत्वमापद्यते । नैतदस्ति । एवं हि

सर्वप्रत्यक्षणामपि प्रामाण्यं स्यात्। अथ तत्र कारणादिशुद्धिकृतो विशेषोऽत्रापि समान इति दर्शयितुं तागादीन् व्याख्यातुमाह। तपो हीत्यादि। इह पुरुषप्रमाण्याच्छब्दप्रामाण्यमुक्तम्। पुरुषस्तु त्रिभिर्गुणैः प्रामाणसर्वज्ञत्वेन वीतरागत्वेन अमूढत्वेन च। तानेव त्रिभिर्विशेषणैर्दर्शयति। मावीतरागोऽनाप्तत्वं वहाति। न मूढो पूर्वापराव्याहतं वक्ति। नासर्वज्ञः प्रमाणमन्वादि रचयति। अथ वीतरागस्य वचने किं प्रयोजनमस्ति, किं वा नास्ति?। यद्यस्ति कथं वीतरागः। अथ नास्ति तदा न प्रेक्षापूर्वकारी। किं चाराधयितुर्यदि फलं ददाति नेतरस्य तदा कथं वीतरागः। अथ न ददाति तदा किं तेनाराधितेनेति। नैतदस्ति। दिनकरदृष्टान्तेन चिन्तामण्यादिदृष्टान्तेन हि शास्त्रकारैः समाहितमिति नेह प्रतन्यते। तदेवं गुणत्रयवैकल्यान्नागमान्तराणां प्रामाण्यम्। तथाहि—लोभादिर्नलोऽधर्मः, स्नानं चाधर्मशोधनमिति पूर्वापरव्याघातः। तथा च—

गंगाद्वारे कुशावर्ते बिल्वके नीलपर्वते।
स्नात्वा कनखले तीर्थे संभवेन्न पुनर्भवे॥
इत्यभिधाय पुनरप्युक्तम्।
चित्तमन्तर्गतं दुष्टं तीर्थस्नानैर्न शुद्ध्यति।
शतशोऽपि हि तद्धौतं सुराभाण्डमिवाशुचि॥

तथा न हिंस्यात्सर्वभूतानीत्यभिधाय पुनर्हिंसाभिधानात्। तथागमान्तरप्रणेतृणामवीतरागत्वमङ्गनासनालिङ्गनाद्युप्रसिद्धमेव। तथा प्रमाणसंपाद्युत्पादव्ययध्रौव्यात्मकवस्त्वनभिधानादप्रामाण्यमित्याह मल्लवादी।

विधिनियमभङ्गवृत्तिव्यतिरिक्तत्वादनर्थकवचोवत्। जैनादन्यच्छासनमनृतं भवतीति।

वैधर्म्येमिति । वैधर्म्यप्रयोगः ॥ तथाच्युत्पादव्ययध्रौव्या-
नधायकत्वेन सत्त्वं व्याप्तं तद्व्यापकाभावाद्व्याप्याभावप्रति
पादनं वैधर्म्यप्रयोगः । विधिश्च नियमश्च भङ्गश्च ते तथोक्तास्तेषु
क्तिस्तदभिधानम् । तद्व्यतिरिक्तत्वात्तद्रहितत्वात् । जैनादन्य-
शासनमिति । शास्यन्ते जीवादयोऽनेनेति शासनमाम्नायः ।
नप्रणीतस्तस्मादन्यद्वेदादि अनृतमसत्यार्थं भवति । अनर्थ-
वचोवत् । अनर्थकात्उन्मत्तकास्तद्वचनमिव । यद्वा अनर्थकं च
तद्वचनं च । दशदाडिमादिवाक्यवत् ॥ विधिरुत्पादो भङ्गो व्ययो
नियमो ध्रौव्यमिति । तदात्मकमसकलमेव वस्तु तस्य साकल्ये-
प्रतिपादनादागमान्तराणां न प्रामाण्यमिति । नैगमसंग्रह-
व्यवहारऋजुसूत्रशब्दसमभिरूढैवंभूता हि सप्तनया मूलद्रव्यास्ति-
पर्यायास्तिकौ मूलनयौ शाखास्तद्भेदाः । तदुक्तम् ।

दव्वट्ठिय पज्जवणयं अत्थेसाधियपज्जासिं ।

तत्र कापिलं शुद्धद्रव्यास्तिकम् बौद्धं शुद्धपर्यायास्तिकम् ।
षड्दर्शनानि शुद्धाशुद्धानीति । तत्र सांख्यो ध्रौव्यमेव प्रति-
पद्यते वान्न विधिविगमौ । तस्य हि न किञ्चिदुत्पद्यते । नापि विन-
श्यति । तदुक्तम् ।

असदकरणादुपादानग्रहणात्सर्वसंभवाभावात् ।
शक्तस्य शक्यकरणात्कारणभावाच्च सत्कार्यम् ॥

एवं पञ्चभिः हेतुभिः सत्कार्यवादः समर्थितः । तथाहि—यद-
तन्न केनापि क्रियते । यथा काशकुसुमम् । असच्च परमतेन कारण-
र्यमिति व्यापकविरुद्धोपलब्धिप्रसङ्गः ॥ न चेदं तस्मात् सात्म-
कारणे कार्यमिति । तथोपादानग्रहणादिति । उपादानकारण
स्य नियतस्यैव ग्रहणम् । अन्यथा सर्वस्यैव विद्यमानत्वाविशे-
षाद् ग्रहणं स्यात्, न वा कस्यचित् । न चैवमतः सत्कार्यमिति ।

तथा सर्वसंभवाभावादिति । सर्वस्मात्सर्वं कार्यमुत्पद्येत । पूर्वं कारणाश्रयणेन प्रसङ्ग उक्तः । संप्रति तु कार्यमाश्रित्येति विशेषः । न च सर्वं सर्वतो भवति । तस्मादयं नियमस्तत्रैव । तस्य सद्भावादिति । तथा शक्तस्य शक्यकरणादिति । यद्यप्यसत्कार्यवादिभिर्नियतमेव कारणं नियतकार्यकरणशक्तिकमुपेयते तथापि शक्यमेव कार्यं करोति । यच्चनीरूपं तदनाधेयातिशयतथाभूतं च कथं केन चिच्छक्येत् कर्तुम् । तस्मात्सदेव शक्यते कर्तुं नासदिति । तथोक्तन्यायादसत्कार्ये न किंचित्कारणं स्यात् ॥ अस्ति च कारणं तदाह—कारणभावाच्च सत्कार्यमिति । तदसत् । एवं हि कार्यकारणे स्याताम् । न हि यद्यतोऽव्यतिरिक्तं तत्तस्य कारणं कार्यं वेति व्यपदेष्टुं युक्तम् । कार्यकारणयोर्भिन्नलक्षणत्वात् । अन्यथा हीदं कार्यं कारणमिति व्यवस्था न स्यात् । माभूदिति चेत् । न, अभ्युपगमविरोधात् । तथाहि—

मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ।
षोडशकस्तु विकारो न प्रकृतिः न विकृतिः पुरुषः ॥

इत्यभ्युपगमात् स च बाध्येत । सर्वेषां हि कार्यत्वं कारणत्वं वा प्रसज्येत । यद्वा पुरुषवत् प्रकृतित्वं च सर्वेषां स्यात् । पुरुषस्य वा प्रकृतिविकृतित्वं प्रसज्येत । तदसंबद्धमिदम् । [illegible] । यदेव दधि तत्क्षीरं यत्क्षीरं तद्दधीति च वदता विन्ध्यवासित्वं ख्यापितं न विन्ध्यवासिनेति । [illegible] ति एतदपि बाध्येत । न हि [illegible] अपि विपरीतमुक्तम् । [illegible]

वैधर्म्यमिति । वैधर्म्यप्रयोगः ॥ तथाह्युत्पादव्ययध्रौव्याभिधायकत्वेन सत्वं व्याप्तं तद्व्यापकाभावाद्व्याप्याभावप्रतिपादनं वैधर्म्यप्रयोगः। विधिश्च नियमश्च भङ्गश्चते तयोक्तास्तेषु वृत्तिस्तदभिधानम् । तद्व्यतिरिक्तत्वात्तद्रहितत्वात् । जैनादन्यच्छासनमिति । शास्यन्ते जीवादयोऽनेनेति शासनमाम्नायः। जिनप्रणीतस्तस्मादन्यद्भेदादि अनृतमसत्यार्थं भवति । अनर्थकवचोवत् । अनर्थकाऽन्मत्तकास्तद्वचनमिव । यद्वा अनर्थकं च तद्वचनं च । दशदाडिमादिवाक्यवत् ॥ विधिरुत्पादो भङ्गो व्ययो नियमो ध्रौव्यमिति । तदात्मकसकलमेव वस्तु तस्य साकल्येनाप्रतिपादनादागमान्तराणां न प्रामाण्यमिति । नैगमसंग्रहव्यवहारऋजुसूत्रशब्दसमभिरूढैवंभूता हि सप्तनया सूत्रद्रव्यास्तिकपर्यायास्तिकौ मूलनयौ रापास्तद्भेदाः । तदुक्तम् ।

दव्वट्टिन यपज्जयणानं अत्तेसावियप्पासिं ।

तत्र कापिलं शुद्धद्रव्यास्तिकम् बौद्धं शुद्धपर्यायास्तिकम् । शेषदर्शनानि शुद्धाशुद्धानीति । तत्र सांख्यो ध्रौव्यमेव प्रतिपन्नवान्न विधिविगमौ । तस्य हि न किञ्चिदुत्पद्यते । नापि विनश्यति । तदुक्तम् ।

असदकरणादुपादानग्रहणात्सर्वसंभवाभावात् ।
शक्तस्य शक्यकरणात्कारणभावाच्च सत्कार्यम् ॥

एवं पञ्चभिः हेतुभिः सत्कार्यवादः समर्थितः । तथाहि—यदसत्तन्न केनापि क्रियते । यथा काशकुसुमम् । असच्च परमतेन कारणकार्यमिति व्यापकविरुद्धोपलब्धिप्रसङ्गः॥ न चैवं तस्मात् स्यात्मत्कारणे कार्यमिति । तथोपादानग्रहणादिति । उपादानकारणस्य नियतस्यैव ग्रहणम् । अन्यथा सर्वस्यैव विद्यमानत्वाविशेषाद् ग्रहणं स्यात्, न वा कस्यचित् । न चैवमतः सत्कार्यमिति ।

तथा सर्वसंभवाभावादिति। सर्वस्मात्सर्वं कार्यमुत्पद्येत। पूर्वं कारणाश्रयणेन प्रसङ्ग उक्तः। संप्रति तु कार्यमाश्रित्येति विशेषः। न च सर्वं सर्वतो भवति। तस्मादयं नियमस्तत्रैव। तस्य सद्भावादिति। तथा शक्तस्य शक्यकरणादिति। यद्यप्यसत्कार्यवादिभिर्नियतमेव कारणं नियतकार्यकरणशक्तिकमुपेयते तथापि शक्यमेव कार्यं करोति। यत्तु नीरूपं तदनाधेयातिशयतथाभूतं च कथं केन चिच्छक्येत् कर्तुम्। तस्मात्सदेव शक्यते कर्तुं नासदिति। तथोक्तन्यायादसत्कार्ये न किंचित्कारणं स्यात्॥ अस्ति च कारणं तदाह—कारणभावाच्च सत्कार्यमिति। तदसत्। एवं हि कार्यकारणे स्याताम्। न हि यद्यतोऽव्यतिरिक्तं तत्तस्य कारणं कार्यं वेति व्यपदेष्टुं युक्तम्। कार्यकारणयोर्भिन्नलक्षणत्वात्। अन्यथा हीदं कार्यं कारणमिति व्यवस्था न स्यात्। माभूदिति चेत्। न, अभ्युपगमविरोधात्। तथाहि—

> मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त।
>
> षोडशकस्तु विकारो न प्रकृतिः न विकृतिः पुरुषः॥

इत्यभ्युपगमात् स बाध्येत। सर्वेषां हि कार्यत्वं कारणत्वं वा प्रसज्येत। यद्वा पुरुषवत् प्रकृतित्वं च सर्वेषां स्यात्। पुरुषस्य वा प्रकृतिविकृतित्वं प्रसज्येत। तदसंबद्धमिदम्। उक्तं च। यदेव दधि तत्क्षीरं यत्क्षीरं तद्दधीति च वदता विन्ध्यवासित्वं ख्यापितं विन्ध्यवासिनेति। हेतुमत्त्वादिधर्मासङ्गिऽव्यक्तमव्यक्तमन्यदिति एतदपि बाध्येत। न हि यद्यतोऽव्यतिरिक्तस्वभावं तत्ततोऽपि विपरीतमुक्तम्। रूपान्तरलक्षणत्वाद्वैपरीत्यस्य, सत्त्वरजस्त्वतमां चैतन्यस्य च भेदेऽन्यनिमित्ताभावात्। ततश्च न भेदः। एवं विश्वमेकं द्रव्यं स्यात् महदादयश्च न भवेयुरिति। अथ नापूर्वरूपोत्पत्त्या कार्यकारणत्वमभ्युपगम्यते ततो रूपाभेदे तद्भिन्नत्वेन

किं तु प्रधानं महदाद्यरूपेण परिणमति । सर्प इव कुंडलादि-रूपेणेति । ततः प्रकृते रूपाभेदेऽपि कार्यकारणव्यपदेशो न वि-रोधमनुभवतीति । तदसत् । परिणामाभिद्धस्तथाहि—किमव-पूर्वरूपापरित्यागेन वा पूर्वरूपपरित्यागेन ? । प्रथमपक्षेऽवस्थानां साकर्यं स्यात् । ततश्च वृद्धावस्थायामपि बालाद्यवस्थोपलभ्येत । द्वितीयपक्षे न परिणामः स्यात् । पूर्वं हि स्वरूपं निरुद्धमपरं चोत्प-न्नमिति कस्य परिणामः । अपि च तस्यैवान्यथाभावपरिणामे । भवद्भिर्वर्ण्यते सचैकदेशेन सर्वात्मना वा ? । न तावदेकदेशे-न । एकस्यैकदेशासंभवात् नापि सर्वात्मना । पूर्वपदार्थनिरा-सेन पदार्थान्तरोत्पादप्रसङ्गात् । अतो न तस्यैवान्यथा त्वं युक्तम् । तस्य स्वभावान्तरोत्पादनिबन्धनात् । व्यव-स्थितस्य धर्मिणो धर्मान्तरनिवृत्तौ धर्मान्तरप्रादुर्भाव-लक्षणः परिणामोऽभ्युपगम्यते । ननु स्वभावान्यथात्वमिति चेत् । असदेतत् । यतः प्रच्यवमानउत्पद्यमानश्च धर्मो धर्मि-णोऽर्थान्तरभूतोऽभ्युपगन्तव्यः । अन्यथा धर्मिण्यवस्थिते तस्य तिरोभावाविर्भावानासंभवात् तथाहि— । यस्मिन्ननुवर्त्तमाने यो व्यावर्त्तते स ततो भिन्नः । यथा घटेऽनुवर्त्तमाने ततो व्यावर्तमानः पटः व्यावर्तते च धर्मिण्यनुमानेऽति आविर्भावतिरोभावासङ्गीव संकलाप इति कथमसौ ततो नाभिन्नइति । धर्मी दतवस्थएवेति कथ परिणतो नाम । यथा नार्थान्तरभूतयोर्घटयोरुत्पादविनाशे-ऽचलितरूपस्य घटादेः परिणामोभवति । अतिप्रसङ्गात् अन्यथा ... पि परिणामि स्यात् । तत्संबंधयोर्धर्मयोरुत्पादविना- । तस्यासौऽभ्युपगम्यते नाद्यस्येति न । सदसतोरसंबन्धभा- तत्सबन्धित्वायोगात् । तथाहि— । संबंधो भवन् सतो भवेद- तो वेति? । न तावत्सबन्धः समधिगताशेषस्वभावस्यान्यानपे-

क्षतया क्वचिदपि पारतन्त्र्यासंभवात्। नाप्यसतः। सर्वोपाख्या-
विरहतया तस्याः क्वचिदप्याश्रितत्वानुपपत्तेः। न हि शशविषा-
णादिः क्वचिदप्याश्रित उपलब्धः। न च व्यतिरिक्तधर्मान्तरोत्पा-
दविनाशे सति परिणामो भवद्भिर्व्यवस्थाप्यते किं तर्हि यत्रा-
त्मभूतस्वभावानुवृत्तिरवस्थाभेदश्च तत्रैव तद्व्यवस्थाभेदश्च। न
चात्यन्तभेदे धर्मिणामात्मभूतो धर्मो अनुवर्तत इति। तन्न भेदे
परिणामः कश्चित्। एकान्तभेदे धर्मा वा स्युर्धर्मी वा?। न
तत्रापि कश्चित्परिणाम इति। ननूक्तं न सलिलात्कल्लोला-
नां भेदो नाप्यहेतुकत्वाद्व्यवस्थानम्। अथ च भिन्ना
इव प्रतीयन्ते, तद्वद्धर्माणामाविर्भावतिरोभावमात्रं परि-
णामो नापूर्वविधिरिति। अथ कोऽयमाविर्भावः?। स्वभावा-
तिशयोत्पत्तिरुत तद्विषयं विज्ञानमाहोस्विदुपलम्भावरणवि-
गमइति?। तत्र न तावदाद्यपक्षः। यतः स्वभावातिशयो यद्यस-
दुत्पद्यते, तदा कथं सत्कार्यवादः। अथ सन् तदा नाविर्भावः।
अथ तस्याप्यवस्था पूर्वमसती पश्चाद्भवति। ननु साप्यवस्था
यदि सती तदा कथं भवति। अथ न सती तदा स कथं ना-
पूर्वविधिरिति। तत्राप्यवस्थान्तराभ्युपगमेऽनवस्थानं न स्वभा-
वातिशयोत्पत्तिराविर्भावइति। नापि तद्विषयं विज्ञानम्। नि-
त्यत्वोपगमात्। तथाहि—भवतां सिद्धान्तः संविदासक्तिप्रलयादे-
कैव बुद्धिरिति। न च न बुद्धिस्वभावो तद्विषया संवित्तिः किं
तु मनःस्वभावेति वक्तव्यम्। बुद्धिरुपलब्धिरध्यवसायो मनः
संवित्तिर्ज्ञानमित्यनर्थान्तरत्वात्। तन्न तद्विषयविज्ञानमप्या-
विर्भावः। नाप्युपलम्भावरणविगमलक्षणः। न ह्यनाधेया-
प्रहेय स्वरूपस्य नित्यस्यावारकं किञ्चित्। असत्त्वा यद्यत्र कथं-
तस्य विगमः। स्वत एव तस्य विगमरूपत्वात्। विगमरूपस्या-

वारकत्वेन कदाचिदुपलम्भः स्यात् । अथ सततदा कथं तस्य विगमः । न हि सततसंमतेन विनश्यति । तिरोभावो विनाश इति चेत् । कोऽयं तिरोभावः? । किं स्वरूपविनाशः, पर्यायविनाशो, वा किं वावरणयोगो, विज्ञानानुत्पादकत्वं, चेति? । तत्र न तावत्स्वरूपपर्यायविनाशः । अनभ्युपगमात् । नाप्यावरणयोगः । अविचलितरूपस्यावरणयोगात्, अकिंचित्कुर्वाणस्यावरणत्वासंभवात् । अन्यथा जगतोऽपि स्यात् । करणे वा नित्यताहानेः विज्ञानानुत्पादकत्वमस्य युक्तम् । येन हि स्वरूपेण ज्ञानमकार्षीत्तस्य विद्यमानत्वात्सहकारिणोः प्रमाणसंवादि । तद्धि प्रत्यक्षं वा स्यादनुमानं वा? । न तावत् प्रत्यक्षम् । परोक्षत्वेनाभ्युपगमात् । यस्याप्यभ्युपगमः सोऽपि न युक्तवादी । यतस्तत्प्रप्रत्ययेत्तेनेन्द्रियजन्यमभ्युपगम्यते किं त्वात्मनः संनिकर्षजम् । नचकूटस्थस्य प्रागिव मनसा संयोगः संभवति । तस्य हि यदसंयुक्तंरूपं तत्संयोगकाले किमस्ति, किं वा नास्ति? । यद्यस्ति तदा न सा संयुज्यते । तथाहि—। यदसंयुक्तरूपं तन्न मनसा संयुज्यते । यथा मुक्तात्मादिअसंयुक्तरूपश्चात्मपूर्वावस्थायामिति स्वभावविरुद्धोपलब्धिरिति संयुक्तासंयुक्तस्वरूपयोः परस्परपरिहारेणावस्थानात् । अथैकरूपस्य तस्य रूपद्वयं तेन नासंयुक्तस्वरूपः । सर्वदैव तद्रूपत्वात् नैतदस्ति । यतो नैकरूपस्य संसरणं स्यात् । तथाहि-यदि कर्तृस्वरूपस्तदा न भोक्तृस्वरूपोऽथ भोक्तृस्वरूपस्तदा न कर्तृस्वरूपो यदि बंधस्वभा[illegible] न, स मुक्तस्वभावस्तदा न बंधस्तत्भाव इति किंचिद्दिगादि[illegible]पि मनसः संयोगः किं न संभवति । अनात्मरूपत्वादिति । न, सर्वव्यापित्वे कुटस्थनित्यत्वे जडत्वे च सति कथमयं [illegible]यमात्माऽनात्मा चेति । यस्य मनःसंबंधः स आत्मा

तदन्योऽनात्मेति चेत् नइतरेतराश्रयत्वप्रसङ्गात् । तत्यात्मत्वे मनःसम्बन्धः, सति मनःसम्बन्धे आत्मत्वमिति । शरीरसम्बन्धेनात्मा तदन्योऽनात्मेति यद्युच्येत तत्रेदमुच्येत शरीरसम्बन्धोऽप्याकाशादिभिः भिन्नो भवति । अनात्मरूपत्वान्नोत्तरम् । इतराश्रयत्वाभिधानात् तन्नात्मा नः सन्निकर्षोत्पन्नप्रत्यक्षाधिगम्यः । नाप्यनुमानगम्यः । तदभावे तस्याप्यभावात् । अथ सर्वगतश्चात्मा । सर्वत्रोपलभ्यमानगुणत्वात् । अतः सर्वगतस्यात्मनः सिद्धिः । तथा हि-सुखदुःखसाधनवस्तूत्पादौ देशान्तरे नाहेतुकः । न चादृष्टादन्यसुखादेर्हेतुः । न चादृष्टस्यानवारकस्य गुणत्वात्तत्रसत्वम् । न चासत्त्वे कार्ये कर्तृत्वमित्यात्मनस्तत्रापि सत्त्वमिति । यतस्तत्रात्मनः सत्त्वे सुखाद्युपलम्भः किं न भवति ? । कार्यसमवायिनो ज्ञानस्याभावादिति चेत । तदपि तत्र किं न चकास्ति ? । शरीराभावादिति चेत् । तत्किं शरीरे समवेतं किं वात्मनि ? । यदि शरीरे तदा शरीरं भोक्तृ स्यान्नात्मा । न चैषोऽभ्युपमः परस्य । अथात्मनि तदा सर्वत्रात्मनो विद्यमानत्वात्समवायस्य च व्यापित्वात् सर्वत्र सुखाद्युपलब्धिः स्यात् । मन शरीरविशिष्टस्यैवोपलब्धिर्नान्यस्येति चेत् । न, एकत्वहानेः । तथा हि—यस्मिन्विशिष्यमाणे यन्न विशिष्यते तत्ततो भिन्नम् । यथा नीलत्वेन विशिष्यमाणे घटेऽविशिष्यमाणो घटः । न विशिष्यते च शरीरात्मनि विशिष्यमाणो देशान्तरस्थ आत्मेति । किञ्च शरीरात्मनि स्थितमदृष्टं देशान्तरस्थसुधादिसाधकवस्तूत्पादकमस्तु किं तत्रादृष्टपरिकल्पनया ? । दूरत्वान्नेति चेत् । कथं चन्द्रादयो विज्ञानोत्पादकाः । तस्मान्नास्ति नियमः । सन्निहितेनैव कारणेनकार्यमुत्पादनीयं न दूरस्थेनेति । तत्र सर्वत्रोपलभ्यमानगुणत्वेनात्मनः सर्वगतमित्येकान्तभेदवादिनो मिथ्यावादिनइति ।

भेदवादिनोऽपि । अथ विनाशस्याहेतुकत्वादुदयानन्तरं
कुतो द्रव्यस्य सम्भवइति । तथाहि—। ये यद्भावंप्रत्यपेक्षा-
वनियताः । यथाऽन्त्याकारणसामग्री स्वकार्योत्पादने ।
श्च विनाशं प्रति भावइति । तथाहि—। विनाशहेतुना
रूपं क्रियते किं वाऽभावः क्रियते ? । न तावत्स्वरूपम् ।
तोरुत्पन्नत्वात् । किं च तत्स्वरूपं नित्यमथानित्यम् ? ।
नित्यं तस्याविनाश्यत्वादकिंचित्करो विनाशहेतुः ।
त्यं तदा तस्य स्वत एव नश्वरत्वात् किं विनाशहे-
अथ कालान्तरस्थायिना विनाशहेतुना विनाशः क्रियते
ालान्तरस्थायित्वे नित्यतैव स्यात् । येन स्वभावेन भावेन
संवत्सरः स्थितः स चेत्संवत्सरान्तरमास्थितव्यं तत्रा-
ति कालान्तरस्थायित्वाऽभ्युपगमे नित्यतैवापतति तत्र
रसम्भवइति तत्राविनाशहेतोरकिञ्चित्करत्वमिति ।
रूपकरणाद्विनाशहेतुरिति । अथ भावं न करोति तदपि
। यस्मादभावः किं पर्युदासरूपः, किं वा प्रसज्यरूपः ? ।
ावत्पर्युदासरूपः । तस्यावस्थान्तरलक्षणत्वात् । तत्करणे
ाशस्य किञ्चित्कृतम् । तथाहि—मुद्गराद्यदि कपालानामु-
घटस्य किमायातम् । तच्चांशेन तेषामुत्पादादिति चेत् ।
ऽन्यस्य ध्वंसः किं न भवति ? । तस्यैव निवृत्तिरिति
, निवृत्ते वस्त्वन्तररूपत्वात्तदुत्पादे सर्वस्य स्यात् । न
स्यचिदभावादिति । अप्रसङ्गः स्यात् । तथाहि—।
ावृत्तौ कपालोत्पत्तिरिति । अपि च ध्वंसोऽपि किं
पः किं वा अर्थान्तरमिति किं वा तुच्छरूप इति ? ।
र्तत इत्यनवस्था । तत्रार्थान्तररूपाभावकरणे भावस्य
ात् । किं तु स्वरसत एव निवर्तमानो घटक्षणो मु-

दण्डादिसहकारिकारणं प्राप्य कपालानुत्पादयति । तदुत्पत्तौ च विजातीयसन्तानोत्पादेनासितो घट इति जनस्याभिधानमिति । अथ प्रसज्यरूपमभावं करोति तदपि नास्ति । नीरूपस्य कर्तुमशक्यत्वात्करणे वा भावरूपतैव स्यात् । यतो भवतीति भावो ऽभिधीयते । नान्यद्भावस्यापि लक्षणम् । अथ भावो भावरूपतया भवति । अभावोऽभावरूपतयेति । विचित्ररूपा हि पदार्था भवन्ति । न हि नीलं पीतरूपतया भवति । तदप्यसत् । यतः केनचिद्रूपेणोन्मज्जनं हि भवनमभिधीयते सर्वोपाख्यारहितस्य नीरूपत्वान्न कस्यचिद्रूपस्य करणमिति कथं तत्र हेतुव्यापारः फलवानिति । तस्मादभावं करोति भावं न करोतीति क्रियाप्रतिषेधमात्रं स्यात् । तस्माद्विनाशस्याहेतुकत्वादुदयानन्तरध्वंसे कुतोऽनुगतस्य रूपस्य सद्भावो येन त्रैरूप्ये वस्तुनः स्यादिति । अपि चैकरूपत्वे वस्तुनः प्रथमे क्षणे यद्रूपं तदेव यदि द्वितीयादिष्वपि तदोत्पत्तिरूपत्वात् प्रथमक्षणस्येव सर्वेषामुत्पत्तिरूपता स्यादिति । प्रतिक्षणमुत्पादे न कस्यचित्स्थितिरिति । अथ प्रथमक्षणे उत्पत्तिर्द्वितीयादिषु स्थितिरिति तदोत्पत्तिस्थितिमद्भ्यां न भेद इति तयोरपि भेदवत्त्वादिना क्षणिकवस्तुनः सिद्धिः कुतो द्रव्यस्य सत्त्वमिति । अत्र वदन्ति । यद्यहेतुकत्वं नाशस्य तदा नित्यं सत्त्वमसत्त्वं वा स्यात् । तत्र यदि घटाभावस्य सत्त्वं तदा हेतोर्देशकालनियमाभावाज्जगति घटस्य नामापि न स्यात् । अथासत्त्वं तदा घटस्य नित्यत्वं व्यापित्वं वा प्रसज्येत । अथ न घटसत्ताभावस्याभेदः तर्हि कथं भावस्याहेतुकत्वम् । अन्यथा घटस्याप्यहेतुकता स्यात् । अथ घटहेतोरन्यो न मुद्गरादिर्हेतुरित्यहेतुकोच्यते । यद्येवं घटोऽपि दृष्टेन घटस्य सत्त्वं स्यात् ।

सत्त्वं भवेदिति । अथ घटेनाभावो जन्यते तदा कथमहेतुकत्वम् । द्वितीयश्च घटक्षणोऽभावेन व्यवहितोत्पत्तिः स्यात्। अथ द्वितीयघटक्षण एव प्रथमस्याभावो नान्योऽभाव अन्तराले कश्चिदिति । ननु क्षणिकत्वात्तद्विनाशे प्रथमघटक्षणस्योत्पत्तिः स्यात् । एवं कपालविनाशेऽपि । अपि च यदि वस्त्वंतरमेव तदा यदुक्तं पर्युदास एव एको नञर्थः स्यात्सोऽपि वा न भवेत् । यदि हि किञ्चित्कुतश्चिद्व्यावर्तेत तदा तद्व्यतिरेके संस्पृश्येत तत्पर्युदासेन । अन्यथा घटो न भवतीत्युक्तेः पटो भवतीति पटस्य विधिरेवोक्तः स्यान्न घटस्य निवृत्तिरिति विधिरूपेत । तस्मात्सुदूरमपि गत्वा वस्तूभयात्मकमभ्युपगन्तव्यम् । स्वरूपेणासत्यरूपेणासदिति चेत् । तेन भाववत्तदभावोऽपि हेतुमानिति । अपि चैवमेकान्तवादिनो जन्माप्यहेतुकं स्यात् । तथाहि—कारणेन कार्यस्य किं जन्म भिन्नं क्रियते, किंवाऽभिन्नम्? । यदि भिन्नं क्रियते तदा कार्यस्य न किञ्चित्कृतं स्यात् । तत्सम्बन्धित्वं च सम्बन्धनिरासान्निरस्तम् । अथाभिन्नं क्रियते तदा तदेव क्रियते न जन्म । तच्च किं विद्यमानं क्रियते, किं वाऽविद्यमानं क्रियते? । यदि विद्यमानं तदा किं क्रियते । तदा शशविषाणमपि क्रियते । तथा विद्यमानमेव क्रियते । न ह्यविद्यमानं क्रियत एव तेन यस्य कारणमस्ति क्रियते । यस्य नास्ति तन्न क्रियते । नन्वविद्यमानत्वाविशेषेऽपि मृत्पिण्डो घटस्यैव कारणं न शशविषाणस्येति किं कृतो नियमः । अथ यस्योत्पत्तिर्दृश्यते तस्य कारणं नेतरस्य । नन्वविद्यमानत्वाविशेषेऽप्येकस्योत्पत्तिर्नान्यस्येति कुतो वस्तुस्वभावैरुत्तरं वाच्यमिति चेत् । एवं तर्हि हेतुमान्नाशोऽप्यहेतुकस्वभावोऽस्तीति । कपालानन्तरं घटस्यैव निवृत्तिर्नान्यस्येति

वस्तुस्वभावैरुत्तरं वाच्यमिति । तद्युक्तिवादिना पादप्रहारे न कर्त्तव्यं किं तु युक्तिरनुसरणीया—तत्रैकान्तवादे उत्पादव्ययौ न युक्तिकाविति । अनेकान्तवाद एव युक्तिभारसह इति । तदेव वस्तु केनचिद्रूपेण विनश्यति केनचिदुत्पद्यते नैकान्तेनासदुत्पद्यते । नाप्येकान्तेन विनश्यतीति युक्तम् तदेवमुत्पादव्ययध्रौव्ययुक्तवस्त्वनभिधानान्यागमान्तराणि मिथ्यावादीनि तस्मात्सूक्तं जैनादन्यच्छाशनमनृतं भवतीति । ननु भवतु विधिनियमभंगवृत्तिव्यतिरिक्तत्वादन्यच्छाशनमनृतमनवरवपुषां त्वभ्युगमः । कथं तस्य हि विधिनियमभगवृत्त्यव्यतिरिक्तत्वादिति तेऽपि स्त्रीमामोक्षनागमभ्युपेतास्तेन मिथ्यादृश इति । तदुक्तम् ।

पयमरकरंवएगंजे नरो वें इत्तुत्तणिदिठसेसंरोवितोविहुमिच्छदिठीजमालिव ।

तथाहि यथा तिर्यग्नारकामरासंख्यानायुः सन्मूर्छजनरेषु रत्नत्रयस्य निर्वाणहेतोरभावाभिहिताऽर्हता तथा न योषासु तथापि ते तन्तुतदभावं प्रतिपन्ना इति । नापि प्रत्यक्षेण रत्नत्रयस्याभावः । परचेतोवृत्तीनां दूरन्वयत्वात् । नाप्यनुमानेनाप्रत्यक्षेएतस्याप्यभावात् । तदेव प्रत्यक्षानुमानागमबाधि ज्ञानदर्शनचारित्रलक्षणं रत्नत्रयमविकलं कारणनिर्वाणस्य स्त्रीष्व स्तीति कथमनिमोक्ष इति प्रयोगः । यदविकलं कारणं तदवश्यमेव कार्यमुत्पादयति । यथाऽन्त्या बीजादिसामग्री अङ्कुरादिकम्, अविकलं च निश्रेयसकारणं योषित्स्विति । अधस्तादुत्कृष्टगमनवदुपरिष्टादप्युत्कृष्टगमनासम्भवस्तासमिति स्त्रीत्वेनैव विरुद्धं रत्नत्रयमसिद्धोहेंतुरिति चेत् । न, प्रतिबन्धाभावात् न हि ...मपृथ्वीगमनाभावो मोक्षाभावेन व्याप्तिविपर्यये व्याप्तेरसिद्धः ।

णम् । धर्मस्य हि यत्साधनमतोऽन्यदधिकरणमाहार्हन् । अपि च संसारस्य किं कारणं वस्त्रादि किं वा रागादिरिति? । वस्त्रादिस्तदास्त ईहितानां मोक्षः स्यात् । अथ रागादिस्तदा तद्विपक्षसेवया रागादिक्षयो न वस्त्रादित्यागेन । अथ वस्त्रादिधावनादौ हिंसा भवति सा च संसारकारणमिति । तन्नाप्रमत्तस्य हिंसायामपि बंधाभावात् । तदुक्तम् ।

जिअदु अमरदु अजीवो अजयाचारिस्स निच्छदु बन्धो ।
पयदस्स नच्छि बन्धो हिंसामित्तेण दोसेण ॥
उच्चालियम्मि पाए इरियासमियस्स वच्चमाणस्स ।
आबाधिज्ज कुलिंगि मरिज्ज तं जोगमासज्ज ।
न कुलस्स तन्निमित्तो बन्धो सुहुमोवि देसिदो समए ।

तस्मात्प्रमादादेव हिंसा । न वस्त्रादिधर्मो [illegible] करणमिति । अथ यद्वा: स्त्रियस्तेन निर्वान्तीति चेत् । [illegible]
[illegible]

अट्ठसयमेगसमएपुरिसाणं निव्वुइ समरकायाः ।
स्त्रीलिंगेण य वीस सेसादसगंतुबोधव्वः ॥

औपचारिकत्वादस्येति चेत् । पुरुषस्यापि हि स्त्रीवेदोदये सति स्त्रीवद्व्यवहृतिर्यथा लोकेषु पुरुषकार्यकरणात्पुरुषोपि स्त्रीति व्यवह्रियते तदसत् । मुख्ये बाधकाभावात् । अन्यथा सर्वशब्दानां व्यवस्था विलुप्येत किंचाप्ता अप्योपचारिकशब्दै र्यदि वस्तु प्रतिपादयेयुस्तदाप्तता क्षीयेत प्रयोजनं चोपचारस्य न किंचिदस्ति वेदोदये तत्संभवप्रतिपादनं प्रयोजनमिति चेत् न, अक्षीणवेदस्यैव निर्वाणप्राप्तेः । न च स्त्रीवेदोदये सति क्षपकश्रेण्यारंभकत्वं येन तथा व्यपदेशः स्यात् । नहि दोषवन्तो गुणश्रेणिमारभन्ते । अथ कदाचित्तस्य स्त्रीवेदोदय आसीत्तेन तथा व्यपदेशस्तर्हि क्रोधाद्युदयोपि कदाचिदासीत्तेन किं न व्यपदिश्यते क्रोध इयं तसीद्भूतीति तस्मादौपचारिकत्वमागमस्य प्रतिपाद्यमाने विधिवाक्यस्यैव प्रामाण्यमिष्यते मीमांसकस्यानुहरति अपि च चतुर्दशगुणस्थानानि स्त्रीणामर्हतोक्तानि निर्मोक्षत्वे विरुध्यन्ते एवं जिनवरकथितस्त्रीष्वपि मोक्षं न साधु मन्यन्ते विप्यादिवादिनोऽपि हि तथापि मिथ्यादृशोऽङ्गीकानावंसमतद्वास्यागमायेऽसवस्थित्युत्पादविनाशकः स्यात् । सत्यतायाः क्तियनूयवोद्बोधविबुद्धितीर्थिकमतप्रादुर्भवद्विप्रमल्लनिवान्यवाद जयच्छ्रीमल्लवादी विभुः

प्रामाण्य । क्तंणसबाव्यमनन्यनेयंसूत्रभिदा निगदितं वि-
२ ५ । मोक्षार्थसाधनदाथी विधौपटीयः । प्रोक्तं प्रमाणमिह
. १ . ॥ १ ॥

सूरिश्चंद्रकुलामलैकतिलकश्चारित्ररत्नांबुधिः वसादवाति

चारित्रीणां वर्द्धमानभिधः । तच्छिष्यावयवः ससूरिरभवत् श्रीशांतिनामाकृता येनेयं विवृत्तिर्विचारकलिकाज्ञानात्मना ॥ २ ॥

अवज्ञानं हीने समधिकगुणे द्वेषमधिकं ॥ समाने सस्पर्द्धो गुणवति गुणो यत्र कुरुते ।

तदस्मिन् संसारे विरलसुजने पास्तवयाप्रतिष्ठा शास्त्रे तदपि च भवेच्छृत्यकरणम् ॥ ३ ॥

इति श्री शांत्याचार्यविरचितायां वार्त्तिकवृत्तावागमपरिच्छेदः चतुर्थः संपूर्णः ॥ संवत् १९६५ शाके १८३० पौष कृष्ण द्वितीया २ तिथौ सौम्यवासरे समाप्तम् ॥

